ऋषीशभूभृद्गलितस्त्रवन्तिका
चिरन्तनाध्यात्मिकसारवाहिका।
पुनाति विश्वं बहुधा विमोहितं
पवित्रगंगेव चिराय भारतम्॥
तदेतदात्मोचिततेजसां झरीं
प्रसारयत्यंग तथापि दुर्भगम्।
विदग्धवैदेशिकतन्त्रयन्त्रितं
समस्ति बन्दीकृतदेवकीनिम्॥[५५]

भारत की गंगा नदी, काशीपुरी,[५६] हिमालय[५७] पर्वत तथा परात्मविद्या सम्पदा का गुणगान करके कवि ने स्वदेश गौरव की भावना को पुष्ट किया है। अमेरिका में स्वामी जी भारत की आध्यात्मिकतत्त्वशेवधि का वर्णन करते हैं।[५८] राष्ट्रेतिवृत्त के ज्ञान से बचपन में ही उनकी बुद्धि विशाल है।[५९] भारतीय संस्कृति का गौरवगान किया गया है।[६०]

राष्ट्र की वर्तमानकालिक अवनति और दुरवस्था को दूर करने के लिए अनेक प्रयत्न करने की प्रेरणा दी गयी है। दरिद्रों की सेवा[६१] तथा तथाकथित अधःकुलजों के प्रति अपनत्व की भावना[६२] के विस्तार की आवश्यकता व्यक्त की गई है। त्याग और सेवा को राष्ट्रोन्नति के लिए काम्य माना गया है-

त्यागश्च सेवा च निमग्नधर्म-
मन्थाचलोद्धारसमर्थकूर्मौ।
समाश्रितौ तौ नियतं दधाताम्
अनन्तमस्मज्जनभागधेयम्॥[६३]

देश विदेश में अपने आध्यात्मिक ज्ञान के प्रचार-प्रसार की आवश्यकता रेखांकित की गई है-

निरन्तरं त्यागिवराः प्रबुद्ध-
संन्यासिनश्शिष्यगणैः समेताः।
संविन्मयीं दीपशिखां वहन्तो
गृहाद् गृहं यान्तु जगत्प्रदीप्त्यै॥
विदेशराज्येष्वपि दिव्यमस्मद्-
वेदान्ततत्त्वं प्रचरत्वमन्दम्।

**मनीषिभिस्तत्र समादृतं तद्**
**भृशं भवेन्नो बहुमानभूमिः॥**[64]

देश की दरिद्रता दूर करने के लिए धन-संग्रह की भी आवश्यकता बताई गयी है।[65] दरिद्रोद्धार को आवश्यक बताया गया है।[66] त्याग और सेवा की भावना को जगाने की तथा प्रतिदिन भारतीय जनों के समुद्धार के लिए प्रयत्नशील रहने की प्रेरणा दी गयी है-

**तथा भारतपुत्राणां दुर्विधेर्हतजीविनाम्।**
**समुद्धारे महान् यत्नः कर्तव्योऽस्माभिरन्वहम्॥**[67]

सामूहिक प्रयत्न को सिद्धि का द्वार माना गया है-

**एकमेवात्र पश्यामि सिद्धिद्वारमनावृतम्।**
**तच्च नान्यद् ध्रुवं प्रेष्ठाः! संयुक्ताद् यतनादृते॥**[68]

त्याग-सेवा-भावना से समन्वित होकर लक्ष्य प्राप्ति पर्यन्त सतत यत्नों को राष्ट्र कल्याण के लिए स्पृहणीय माना गया है-

**सुप्तावस्थां गतामेनां त्यागसेवनवासनाम्।**
**उद्‌बोधयध्वं भद्रं सा लोकाय वितरिष्यति॥**
**बुद्ध्वा विगतमोहं द्रागुत्तिष्ठन्तु वितन्द्रिताः।**
**विरामो मास्तु यत्नानां यावल्लक्ष्यमवाप्स्यते॥**[69]

'अतन्द्रकठिनोद्यम' को स्पृहणीय गुण माना गया है।[70] कर्मकर मजदूरों में ईश्वर के दर्शन करने की आवश्यकता प्रतिपादित की गयी है।[71] देशाभिमान की भावना को वरेण्य गुण स्वीकार किया गया है।[72]

नैराश्य से आशा की अवस्था में राष्ट्र के पहुँचनें का भी संकेत दिया गया है-

**उदियाय तदास्माकमार्षभूमेस्तमोवृते।**
**भागधेयाम्बरे किंचित्स्फुरत्कनकतारकम्॥**[73]

'श्रीस्वामिविवेकानन्दचरितम्' और 'विश्वभानुः' यद्यपि दानों महाकाव्यों में राष्ट्रीय भावना की अभिव्यक्ति हुई है तथापि पहले महाकाव्य में उसका विस्तार अधिक है। परतन्त्रताजन्य पीड़ा का अनुभव, देशप्रेम की भावना को उद्दीप्त करने के लिए भारत के उज्ज्वल अतीत तथा विविध स्थानों, नदियों, तीर्थों और पर्वतों की महिमा के प्रकाशन, वर्तमान दशा को सुधारने के लिए समुचित प्रयासों की आवश्यकता तथा भारत के

उज्ज्वल भविष्य की आशा का जैसा खुलकर वर्णन 'श्रीस्वामिविवेकानन्दचरितम्' में हुआ है वैसा 'विश्वभानुः' में नहीं हुआ। 'विश्वभानुः' में इनका संकेत या संक्षिप्त उल्लेख हुआ है।

यद्यपि स्वामी विवेकानन्द का जीवनदर्शन मानव मात्र की सेवा का रहा है और राजनीति से ऊपर उठकर लोकसेवा को उन्होंने अपना लक्ष्य रखा तथापि उनके चरित वर्णन के माध्यम से राष्ट्रप्रेम की शिक्षा भी दी जा सकती है। इस दिशा में श्री भण्डारकर ने अधिक ध्यान दिया है जबकि डा. पिल्लै ने अपेक्षाकृत कम। संभवतः विश्व के भानु को वे एक राष्ट्र का ही भानु बनाने में अधिक दत्तचित्त नहीं थे। श्री भण्डारकर ने भारत को विश्व के अंग के रूप में देखा है तथा अंग और अंगी दोनों के कल्याण की कामना की है।

'श्रीस्वामिविवेकानन्दचरितम्' और 'विश्वभानुः' का बीसवीं शताब्दी के संस्कृत भाषा में रचित राष्ट्रीय महाकाव्यों की परम्परा में विशिष्ट स्थान है। स्वामी विवेकानन्द और जवाहरलाल नेहरू के जीवनचरित पर आधारित काव्यों के रचयिताओं ने लोकोपयोगी दृष्टिकोण को काव्य का विषय बनाया है। स्वामी जी ने भी राष्ट्रीय भावना और विश्वमंगलकामना में सामजस्य के सूत्र खोजे थे और पं. नेहरू ने भी 'जियो और जीने दो' के सिद्धान्त का प्रचार किया था। शेष महाकाव्यों में राष्ट्र के प्रति प्रेम की अभिव्यक्ति तो हुई है किन्तु विश्व सन्दर्भ की परवाह किये बिना। इस दृष्टि से हमारे समीक्ष्य दोनों महाकाव्यों का विशिष्ट महत्त्व है कि ये बिना किसी पर आक्रामक टिप्पणी किये राष्ट्रनिर्माण की भावना का विस्तार करते हैं तथा राष्ट्र को धरतीमाता का एक अंग मानते हैं। राष्ट्रभक्ति और विश्वमंगलभावना का सामंजस्य एक ऐसी प्रवृत्ति है जिसका विश्व के किसी भी भूखण्ड या जन से टकराव नहीं है और इस दृष्टि से दोनों महाकाव्यों का अप्रतिम योगदान है।

**सन्दर्भ :-**

१. डा. रमाकान्त शुक्ल, अर्वाचीनसंस्कृतमहाकाव्यविमर्शः, प्रथम खण्डः, १९७९, पृ. ५

२. डा. रेवाप्रसाद द्विवेदी, कविरत्न ब्रह्मानन्द शुक्ल और उनका नेहरूचरित-महाकाव्य (लेख), अर्वाचीनसंस्कृतमहाकाव्यविमर्शः, (द्वि.ख.), पृ.१५, १९८०, सम्पा. डा. रमाकान्तशुक्ल, देववाणी-परिषद्, दिल्ली
३. डा. रमाकान्त शुक्ल, अर्वाचीनसंस्कृतमहाकाव्यविमर्शः, प्रथम खण्डः, १९७९, पृ. ५, देववाणी-परिषद्, दिल्ली
४. डा. नगेन्द्र, हिन्दी साहित्य का इतिहास, पृ. ६२८
५. डा. रमाकान्त शुक्ल, संस्कृत साहित्य में राष्ट्रिय भावना, ले. डा. हरिनारायण दीक्षित, प्रास्ताविकम्, १९८४, पृ. ८, देववाणी परिषद्, दिल्ली
६. डा. हरिनारायण दीक्षित, संस्कृत साहित्य में राष्ट्रिय भावना, पृ.२७
७. डा. हरिनारायण दीक्षित, संस्कृत साहित्य में राष्ट्रिय भावना, पृ.२९
८. डा. हरिनारायण दीक्षित, संस्कृत साहित्य में राष्ट्रिय भावना, पृ.४५-४७
९. रमेशचन्द्र मजुमदार, भारत का बृहत् इतिहास, तृ.भा., पृ.२५३
१०. आशाप्रसाद, स्वामी विवेकानन्द एक जीवनी, आमुख, सिन्धु पब्लिकेशंस, नयी दिल्ली, पं.संस्करण १९७३
११. श्रीस्वामिविवेकानन्दचरितम् १४/४६-४७
१२. डा. रहसबिहारी द्विवेदी, अर्वाचीनसंस्कृतमहाकाव्यानुशीलनम्, सागरिकासमिति, सागर, १९८१, प. १०७
१३. श्रीस्वामिविवेकानन्दचरितम् १/४६
१४. श्रीस्वामिविवेकानन्दचरितम् १/४७
१५. श्रीस्वामिविवेकानन्दचरितम् २/२३-३३
१६. श्रीस्वामिविवेकानन्दचरितम् २/५३
१७. श्रीस्वामिविवेकानन्दचरितम् ७/३६, ७/३७-३८, ८/३-७९
१८. श्रीस्वामिविवेकानन्दचरितम् ७/४५-४६
१९. श्रीस्वामिविवेकानन्दचरितम् ८/३-८
२०. श्रीस्वामिविवेकानन्दचरितम् ८/५२-५६
२१. श्रीस्वामिविवेकानन्दचरितम् १३/४९
२२. श्रीस्वामिविवेकानन्दचरितम् १४/८
२३. श्रीस्वामिविवेकानन्दचरितम् १४/१३-१८
२४. श्रीस्वामिविवेकानन्दचरितम् १६/१६-१९, १६/५४
२५. श्रीस्वामिविवेकानन्दचरितम् ८/७०
२६. श्रीस्वामिविवेकानन्दचरितम् ८/७२
२७. श्रीस्वामिविवेकानन्दचरितम् ९/२-३

२८. श्रीस्वामिविवेकानन्दचरितम् ९/१४-२२
२९. श्रीस्वामिविवेकानन्दचरितम् ११/२१-२२
३०. श्रीस्वामिविवेकानन्दचरितम् ११/५६-६६
३१. श्रीस्वामिविवेकानन्दचरितम् १५/२४-२८
३२. श्रीस्वामिविवेकानन्दचरितम् १५/२९-३०
३३. श्रीस्वामिविवेकानन्दचरितम् १६/२-५
३४. श्रीस्वामिविवेकानन्दचरितम् १६/६
३५. श्रीस्वामिविवेकानन्दचरितम् १६/९-१५
३६. श्रीस्वामिविवेकानन्दचरितम् १६/२२-२४
३७. श्रीस्वामिविवेकानन्दचरितम् १६/२५
३८. श्रीस्वामिविवेकानन्दचरितम् १६/२६-३२
३९. श्रीस्वामिविवेकानन्दचरितम् १६/३३
४०. श्रीस्वामिविवेकानन्दचरितम् १६/३४-३६
४१. श्रीस्वामिविवेकानन्दचरितम् १६/४६
४२. श्रीस्वामिविवेकानन्दचरितम् १७/२
४३. श्रीस्वामिविवेकानन्दचरितम् १६/८
४४. श्रीस्वामिविवेकानन्दचरितम् १६/५५
४५. श्रीस्वामिविवेकानन्दचरितम् १४/२८-४०
४६. श्रीस्वामिविवेकानन्दचरितम् ११/६०
४७. श्रीस्वामिविवेकानन्दचरितम् १५/५१
४८. श्रीस्वामिविवेकानन्दचरितम् १६/४
४९. श्रीस्वामिविवेकानन्दचरितम् १६/५२
५०. श्रीस्वामिविवेकानन्दचरितम् ७/५६
५१. विश्वभानुः १०/११
५२. विश्वभानुः १५/२२
५३. विश्वभानुः १/१४
५४. विश्वभानुः १९/२१
५५. विश्वभानुः १/१२-१४
५६. विश्वभानुः २/२३
५७. विश्वभानुः ११/८
५८. विश्वभानुः ७/१०
५९. विश्वभानुः ३/२

६०. विश्वभानुः १४/७
६१. विश्वभानुः १४/३
६२. विश्वभानुः ४/१०
६३. विश्वभानुः १४/१६
६४. विश्वभानुः १४/१७-१८
६५. विश्वभानुः १४/२१-२२
६६. विश्वभानुः १७/५
६७. विश्वभानुः १९/८
६८. विश्वभानुः १९/९
६९. विश्वभानुः १९/२२-२३
७०. विश्वभानुः २०/२१
७१. विश्वभानुः २१/१२
७२. विश्वभानुः १४/२५
७३. विश्वभानुः १९/२५

●

# अष्टम अध्याय

## उपसंहार

विगत सात अध्यायों में किये गये 'श्रीस्वामिविवेकानन्दचरितम्' और 'विश्वभानुः' महाकाव्यों के तुलनात्मक और समीक्षात्मक अध्ययन के उपरान्त हम इस निष्कर्ष पर पहुँचते हैं कि ये दोनों महाकाव्य अपने युग की चेतना की अभिव्यक्ति के काव्यात्मक साधन तो हैं ही, संस्कृत की महाकाव्य-परम्परा के अभी भी प्राणवान होने का प्रमाण भी प्रस्तुत करते हैं।

महापुरुषों के चरित के आधार पर रचित महाकाव्यों की लम्बी परम्परा है। राम, कृष्ण, बुद्ध, विक्रमांकदेव, हम्मीर, पृथ्वीराज, तुलसीदास, तुकाराम, रामदास, लोकमान्य बालगंगाधर, महात्मा गान्धी, सुभाषचन्द्र बोस, लक्ष्मीबाई, इन्दिरा गांधी तथा अन्यान्य महापुरुषों के जीवनचरित पर आधारित अनेक महाकाव्य संस्कृत में लिखे गये हैं। इन रचनाओं के माध्यम से कवि व्यक्ति के चरित-वर्णन के माध्यम से उसके महान् सिद्धान्तों के प्रति आस्था व्यक्त करता है तथा अपने समकालीन और उत्तरकालीन समाज को उन सिद्धान्तों के प्रति आवर्जित करना चाहता है। इस प्रकार वह अपने साधनों से लोक-सेवा करना चाहता है। यदि वह किसी समकालीन व्यक्ति को 'महापुरुष' की कोटि में गिनकर उसका चरित वर्णन करता है तब भी वह उसके दोषों की उपेक्षा कर देता है और उसके लोकोपकारी गुणों का ही वर्णन करता है। यदि वह अतीतकालीन किसी महापुरुष का वर्णन करता है तब तो यह स्थिति और भी पुष्ट रहती है क्योंकि अतीतकालीन नायक के वर्णन से पाठक या श्रोता का साधारणीकरण अपेक्षाकृत शीघ्र और सुविधा से हो सकता है। समकालीन नायक के विरोधी उसके काव्यमय वर्णन के प्रति संभवतः इतनी जल्दी साधारणीकृत न हो पायें जितने अतीतकालीन नायक के वर्णन के प्रति हो सकते हैं। इसी को ध्यान में रखकर काव्यशास्त्रियों ने अवर्णनीय घटना की 'त्याज्यता' या 'अन्यथाप्रकल्पन' का विधान किया है। यदि अतीतकालीन या समकालीन महापुरुष लोकाराधित है और निन्दित नहीं है तब तो उसके वर्णन से भी

समकालीन पाठक साधारणीकृत हो जाता है। कवि उसके सद्गुणों का ऐसा परिचय देता है कि पाठक या श्रोता के मन में एक नवीन स्फूर्ति का संचार होता है। स्वामी विवेकानन्द एक ऐसे ही व्यक्ति थे जिनके समकालीन मनुष्य भी उनके परम प्रशंसक थे और परवर्ती तो हैं ही। उन्होंने परतन्त्रता के दिनों में भारत की प्रतिष्ठा विदेशों में जाकर की थी। कुछ अंग्रेजों की यह धारणा हो गई थी कि जहाँ स्वामी विवेकानन्द जैसे महापुरुष हैं वहाँ हमारा शासन करना उचित नहीं है। उन्होंने पूरे विश्व को एक इकाई मानकर अपना जीवन-दर्शन प्रस्तुत किया। और यह जीवन-दर्शन वेदान्त की भित्ति पर खड़ा था। इसमें टकराव के स्थान पर सहयोग और विवाद के स्थान पर शान्ति को वरण किया गया था। उन्होंने दुनिया भर के दीन-हीनों में ईश्वर के दर्शन करने और उनकी सेवा करने का विचार विश्व के सन्मुख रखा। उन्होंने भारत के उद्धार के लिए 'उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत' का नारा दिया। उन्होंने विश्वकल्याण और देशप्रेम की भावना साथ-साथ जगाने का रास्ता चुना। गांधीयुगीन सभी नेताओं पर उनके विचारों का प्रभाव था। उनसे दीन-दुःखियों की सेवा का व्रत गान्धी जी ने लिया, 'जियो और जीने दो', 'फूलो-फलो और फूलने-फलने दो' की भावना जवाहरलाल नेहरू ने सीखी। और आज 'विश्वशान्ति' के जिस मन्त्र का भारत और अनेक तटस्थ देश जाप कर रहे हैं उसकी नींव स्वामी विवेकानन्द अपने जीवन काल में रख चुके थे। उन्होंने देश में नये अरुणोदय की कल्पना कर युवकों में नया उत्साह भर दिया। इतिहास साक्षी है कि उन्होंने 'रामकृष्ण-मिशन' की स्थापना से समाज-सेवा का एक अभूतपूर्व सूत्रपात किया। वे भारत और दुनिया दोनों के लिए प्रेरणास्रोत बन गये। ऐसे महापुरुष के चरित का काव्यात्मक वर्णन करकने वाले श्री त्र्यम्बक आत्माराम भण्डारकर के 'श्रीस्वामिविवेकानन्दचरितम्' और डा. पी.के. नारायण पिल्लै के 'विश्वभानुः' महाकाव्यों की गणना भी महापुरुषों के चरित का आख्यान करने वाले महाकाव्यों की परम्परा में की जानी चाहिए।

दोनों कवियों की आस्था स्वामी विवेकानन्द से जुड़ी है। श्री भण्डारकर का जन्म उसी वर्ष में हुआ जिस वर्ष अर्थात् १८९३ को स्वामी जी ने शिकागो धर्ममहासभा में विश्व-वेदान्त धर्म की पताका

लहराकर मानवमात्र की समता का उद्घोष किया था और प्राचीन सिद्धान्त को नये परिप्रेक्ष्य में प्रस्तुत कर उसकी समसामयिक या सार्वकालिक प्रासंगिकता प्रतिपादित की थी। डा. पिल्लै का जन्म स्वामी जी की महासमाधि के आठ वर्ष बाद हुआ। श्री भण्डारकर ने तो बचपन में स्वामी जी के दर्शन भी किये थे। इस प्रकार दोनों कवियों को स्वामी जी के चरित ने आरंभ से ही प्रभावित किया था। अपने दीर्घकालीन चिन्तन-मनन के उपरान्त दोनों कवियों ने ये महाकाव्य संस्कृत-जगत् को दिये हैं। दोनों कवि विद्वान् भी हैं और चिन्तक भी। ऐसे में अपनी रचना के माध्यम से उन्होंने मन को रमाने वाली अर्थात् 'सद्यः परनिर्वृति' देने वाली और स्वस्थ जीवन दृष्टि देने वाली अर्थात् 'कान्तासम्मित उपदेश' देने वाली कृतियाँ प्रस्तुत की हैं।

इन कृतियों का साहित्यिक मूल्यांकन करने की आवश्यकता बनी हुई थी। इनके कथानक, महाकाव्यत्व, साहित्यिक सौष्ठव, युगबोध -पक्ष, जीवन-दर्शन एवं इतिहास-संस्कृति के प्रतिबिम्बन का अध्ययन इनको समझने का अच्छा प्रयास हो सकता है। इसी कारण प्रस्तुत ग्रन्थ लिखा गया है।

प्रथम अध्याय में कवियों के जीवन-चरित को प्रामाणिक रूप में प्रस्तुत करने का उपक्रम किया गया है। अन्तःसाक्ष्य और बहिःसाक्ष्य के आधार पर इनके व्यक्तित्व और कर्तृत्व का परिचय दिया गया है।

द्वितीय अध्याय में समीक्ष्य महाकाव्यों के कथानक की समीक्षा और तुलना के अनन्तर यह स्पष्ट हो जाता है कि 'श्रीस्वामिविवेकानन्दचरितम्' के १८ सर्गों और 'विश्वभानुः' के २१ सर्गों के कथानक इतिहासविरुद्ध नहीं है। दोनों महाकाव्यों का कथानक इतिहाससम्मत है। १२ जनवरी १८६३ को श्री विश्वनाथदत्त और भुवनेश्वरी की सन्तान के रूप में कलकत्ता में उत्पन्न होने वाले तथा ४ जुलाई १९०२ की रात्रि में महासमाधि लेने वाले बचपन के नरेन्द्र और बाद के विवेकानन्द इतिहास में उल्लिखित व्यक्ति हैं। उनके महत्कार्यों का परिचय इन महाकाव्यों के कथानक से दिया गया है। उनके जीवन की महत्त्वपूर्ण सभी घटनाओं का दोनों महाकाव्यों के कथानक में उल्लेख किया गया है। उनके बचपन की सर्पदर्शन वाली घटना तथा भगवान् बुद्ध को देखने वाली घटनाओं

का भी दोनों महाकाव्यों में उल्लेख हुआ है। चूंकि कवि मात्र एक रोजनामचा या इतिहास लिखने वाला नहीं होता, अतः दोनों कवियों ने इतिहाससम्मत कथानक में भी यत्किंचित् कल्पना का आश्रय लिया है। यह काव्यात्मकता की सृष्टि के लिए किया गया है।

अपेक्षाकृत, विश्वभानुकार ने कथानक में कल्पना का अधिक आश्रय लिया है। काव्य के आरंभ में कवि ने दिव्यर्षिमण्डल में एक दिव्य बालक और ऋषि के वार्तालाप की कल्पना की है। ऐसी घटना का कोई ऐतिहासिक आधार नहीं है किन्तु कवि ने इस घटना की कल्पना से महाकाव्य का नाटकीय प्रारंभ करने में सफलता प्राप्त की है। इससे थोड़ी रहस्यात्मकता और उत्सुकता की सृष्टि भी हो गयी है। कवि को तत्कालीन पराधीन भारत के चित्रण का अवसर भी मिल गया है और कथावतार की पूर्वपीठिका भी बन गयी है। साथ ही पाठकों की यह मनःस्थिति बन जाती है कि श्रीरामकृष्ण परमहंस और स्वामी विवेकानन्द दोनों दिव्यांश हैं। इसी प्रकार, विश्वभानु में नरेन्द्र के जन्म के अवसर पर काली के साट्टहास नृत्य एवं कलहंसों के पंख पसार कर उड़ने की भी कल्पना कथानक को गरिमा और लोकोत्तरता प्रदान करने के लिए गयी है। स्वामी जी की महासमाधि के वर्णन में भी कवि ने उदात्त कल्पना की है। कवि ने जिस नाटकीयता के साथ काव्य का प्रारंभ किया था, उसी नाटकीयता से अन्त किया है। दिव्यमण्डल से अवतीर्ण अंश अपना कार्य सम्पादन कर पुनः दिव्य मण्डल में चला गया- यह दिखाने के लिए कवि ने यह कल्पना की है। किन्तु ये कल्पनाएं मुख्य कथानक की इतिहास सम्मतता को कहीं भी खण्डित नहीं करती अपितु इन दोनों में सामंजस्य और सहयोग की प्रतीति होती है। दोनों महाकाव्यों के कथानकों की तुलना करने पर यह भी ज्ञात होता है कि कुछ प्रसंगों का 'श्रीस्वामिविवेकानन्दचरितम्' में विस्तार से वर्णन है, जबकि 'विश्वभानुः' में संक्षिप्त। कुछ प्रसंग 'विश्वभानुः' में हैं जो 'श्रीस्वामिविवेकानन्दचरितम्' में नहीं आये हैं। दोनों महाकाव्यों का कथानक महाकाव्योचित है- इसमें सन्देह नहीं।

तृतीय अध्याय के अध्ययन से इस निष्कर्ष पर सहज ही पहुंचा जा सकता है कि प्राच्य और प्रतीच्य काव्यशास्त्रियों के द्वारा निर्धारित महाकाव्य-लक्षणों का पालन प्रायः दोनों रचनाएं करती हैं।

'श्रीस्वामिविवेकानन्दचरितम्' में विस्तार और विचित्रता अधिक है जबकि 'विश्वभानुः' में संक्षेप और मसृणता अधिक है। वर्तमान युग में महाकाव्य के बाह्य लक्षणों का आवश्यकतानुसार स्वीकार-परिहार किया जाने लगा है। इसी का दर्शन हमें इन दोनों महाकाव्यों को देखने पर होता है। किन्तु इसमें सन्देह नहीं कि ये दोनों ही चरित्रप्रधान महाकाव्य संस्कृत-साहित्य की महत्त्वपूर्ण कृतियां हैं।

कवि अपने कथ्य को सौन्दर्य से सजाकर प्रस्तुत करता है। वह सीधी सपाट खवर नहीं देता। वह अपने कथ्य को सुन्दर और शिव बनाकर प्रस्तुत करता है। इसे ही काव्य-सौष्ठव कहा जाता है। रसयोजना, विविध वर्णन, गुण-रीति, अलंकार-योजना तथा छन्दोयोजना के सहारे कवि अपनी रचना में सौन्दर्य की सृष्टि करता है। चतुर्थ अध्याय में हमने पाया है कि दोनों महाकाव्यों में शान्तरस-पर्यसवसायी वीररस अंगी रस है। काव्यनायक स्वामी विवेकानन्द दयावीर और धर्मवीर हैं। धर्मकारुण्यवीर स्वामी विवेकानन्द दीन-दुःखियों की सेवा के लिए सदैव सोत्साह रहे तथा लोकसेवा के अनन्तर महासमाधि में लीन होकर उन्होंने निर्वाणसुख प्राप्त किया। वस्तुतः यह एक गरिमान्वित रसस्थिति है जबकि नायक उत्साह सम्पन्न और शान्तिकामी भी हो। दोनों महाकाव्यों में अंगी रस-शान्तरस पर्यवसायी वीर रस- के अतिरिक्त अद्भुत, भक्ति, वात्सल्य और करुण की भी व्यंजना हुई है। दोनों महाकाव्यों में अवसरानुसार विविध वर्णन उपन्यस्त किये गये है। 'श्रीस्वामिविवेकानन्दचरितम्' के वर्णनों में विस्तार और आलंकारिकता अधिक है जबकि 'विश्वभानुः' के वर्णनों में संक्षिप्तता और स्वभावोक्ति। किन्तु इतना दोनों महाकाव्यों के विषय में कहा जा सकता है कि दोनों के वर्णन बोझिल नहीं हैं। वर्णन और कथातत्त्व प्रायः दोनों के मिले हुए हैं, जोकि एक काम्य विशेषता होती है। यद्यपि दोनों रचनाओं में वैदर्भीरीति प्रधान है तथापि 'विश्वभानुः' की शैली अधिक प्रसादगुणोपेत है। 'श्रीस्वामिविवेकानन्दचरितम्' में कहीं-कहीं चित्रकाव्यता के पालन से सहज प्रासादिकता समाप्त होती सी दृष्टिगोचर होती है पर ऐसे स्थल अधिक नहीं हैं। अलंकारों की योजना में श्रीस्वामिविवेकानन्द-चरितकार अधिक आग्रहशील हैं जबकि विश्वभानुकार अपृथग्यत्ननिर्वर्त्य अलंकारों के मार्ग का अनुसरण करता है। श्रीस्वामिविवेकानन्दचरितम् के

रचयिता ने एक पूरे सर्ग में अलंकारों की साग्रह योजना की है जो उसे विचित्रमार्गानुयायी कृति सिद्ध करती है। विश्वभानुकार की प्रवृत्ति अपने कथ्य को सरल और संक्षिप्त रूप में प्रस्तुत करने की है, अतः उसकी दृष्टि अधिक अलंकार योजना के लिए साग्रह नहीं है। छन्दोयोजना में भी यही स्थिति है। 'श्रीस्वामिविवेकानन्दचरितम्' में ३७ छन्दों का प्रयोग हुआ है जबकि 'विश्वभानुः' में केवल नौ छन्दों का। दोनों में ही वर्णवृत्त प्रयुक्त हुए हैं। 'श्रीस्वामिविवेकानन्दचरितम्' के कर्ता ने महाकाव्य के पारम्परिक लक्षण का ध्यान रखते हुए 'नानावृत्तमय सर्ग' की भी रचना करके अपने छन्दोनिर्माणकौशल का परिचय दिया है जबकि 'विश्वभानुः' के कर्ता ने एक सर्ग में प्रायः एक ही छन्द का प्रयोग किया है। श्रीस्वामिविवेकानन्दचरितम् में एकआध स्थान पर छन्दोदोष दिखाई देता है जहां कि कवि ऋकार से युक्त व्यंजन को संयुक्ताक्षर समझ बैठा है और उस भ्रान्ति के आधार पर उसके पूर्ववर्ती अक्षर को 'संयुक्ताद्य गुरु' मान बैठा है। उदाहरणार्थ वह 'प्रतिगृहं पूजनमांजनेय.' (१/१७) तथा 'चेत्कश्चिदीशितृपदप्रतिष्ठ' (१/२८) में वह 'प्रतिगृह' को 'प्रतिग्रिहं' तथा 'ईशितृ' को 'ईशित्रि' पढ़ना चाहता है। किन्तु ऐसे स्थल इक्के-दुक्के ही हैं और इतनी बड़ी रचना में मनुष्य से भूल की संभावना रह ही सकती है। हो सकता है, कवि के मस्तिष्क में भाषाविज्ञान की शब्दावली में 'भ्रान्त उच्चारण' जमा हुआ हो। अस्तु, इतना निश्चित है कि संस्कृत काव्यमार्ग के रचनाकौशल का दोनों कवियों ने अनुसरण किया है। इस दृष्टि से उन्होंने कोई नवीन प्रयोग तो नहीं किया, किन्तु परम्परा का ठीक-ठाक पालन भी एक बड़ी उपलब्धि होती है।

व्यक्ति जिस युग में जीता है उसकी चेतना से अवश्य परिचित और प्रभावित होता है। वह अपने युग की परिस्थितियों को समझकर अपना रास्ता चुनता है। काव्यनायक और कवि-दोनों पर ही यह नियम लागू होता है। स्वामी विवेकानन्द ने अपने युग को समझकर लोकसेवा और समन्वय का रास्ता चुना था। दोनों कवियों को अपने कथ्य युग का सटीक बोध है और यह बोध उनके अपने युग से भी जुड़ा है। यह युगबोध या परिस्थितियों का यथार्थ ज्ञान दोनों की रचनाओं में जिस प्रकार झलकता है, पंचम अध्याय में हमने यह देखने का प्रयास किया है।

षष्ठ अध्याय में दोनों महाकाव्यों के दार्शनिक पक्ष पर विचार करते हुए हमने पाया है कि दोनों ही महाकाव्यों में, लोकसेवा के अनन्तर व्यक्ति की मुक्ति और कल्याण के जीवन-दर्शन को प्रमुखतः प्रस्तुत किया गया है क्योंकि यह युग-सन्देश एक ऐतिहासिक आवश्यकता थी। स्वामी विवेकानन्द ने इसी दर्शन का प्रचार किया था। 'सर्व खल्विदं ब्रह्म' की धारणा पर टिके वेदान्त दर्शन की समाज-कल्याणमुखी अभिनव व्याख्या ने आज के समाज को एक व्यावहारिक जीवन-दर्शन प्रदान किया। इस जीवन दर्शन के अनुयायी के लिए कोइ अस्पृश्य नहीं रहता, उसके लिए गरीब उपेक्षणीय नहीं है, धरती पर कहीं भी उत्पीड़न और किसी व्यक्ति का बन्धन वह नहीं चाहता और न सहना चाहता। इस दर्शन को 'श्रीस्वामिविवेकानन्दचरितम्' विस्तार से प्रस्तुत करता है और 'विश्वभानुः' अपेक्षाकृत संक्षेप से। इसके अतिरिक्त श्री भण्डारकर ने अपने प्राच्य और प्रतीच्य दर्शनशास्त्र के ज्ञान का भी अवसरानुसार प्रतिफलन किया है। डा. पिल्लै में अपनी दर्शनशास्त्र विषयिणी व्युत्पत्ति काव्य में प्रदर्शन करने की कोई लालसा नहीं प्रतीत होती।

दोनों ही महाकाव्यों में विश्वमंगल भावना के साथ राष्ट्रीय भावना भी अभिव्यक्त हुई है। सप्तम अध्याय में हमने दोनों महाकाव्यों में अभिव्यक्त राष्ट्रीय चेतना का परिचय प्राप्त करना चाहा है। बीसवीं शताब्दी में रचित संस्कृत भाषा के महाकाव्यों की सुदीर्घ परम्परा में इन दोनों महाकव्यों का भी अपना योगदान है। राष्ट्रीय भावना की अभिव्यक्ति 'श्रीस्वामिविवेकानन्दचरितम्' में अधिक विस्तार से हुई है। भारत की परतन्त्रता से जन्य पीड़ा का अनुभव, देशप्रेम की भावना को उद्दीप्त करने के लिए भारत के उज्ज्वल अतीत तथा विविध स्थानों, नदियों, तीर्थों और पर्वतों की महिमा के प्रकाशन, देश की वर्तमान दशा को सुधारने के लिए समुचित प्रयासों की आवश्यकता तथा भारत के उज्ज्वल भविष्य की आशा का जैसा सविस्तार वर्णन 'श्रीस्वामिविवेकानन्दचरितम्' में हुआ है वैसा 'विश्वभानुः' में नहीं हुआ। 'विश्वभानुः' में इनका संकेत या संक्षिप्त उल्लेख है। मानवमात्र की सेवा तथा राजनीति से ऊपर उठकर लोकसेवा करने के जीवन दर्शन के समुपासक स्वामी विवेकानन्द के चरित-वर्णन के माध्यम से राष्ट्रप्रेम की भावना भी जगाई जा सकती है. इस दिशा में

श्री भण्डारकर ने अधिक ध्यान दिया है, जबकि डा. पिल्लै ने अपेक्षाकृत कम। 'श्रीस्वामिविवेकानन्दचरितम्' और 'विश्वभानुः' का बीसवीं शताब्दी में प्रणीत संस्कृत भाषा के राष्ट्रीय महाकाव्यों में इस दृष्टि से विशिष्ट स्थान है कि राष्ट्रप्रेम और विश्वप्रेम में सामंजस्य के सूत्र खोजने का इनमें स्तुत्य प्रयास किया गया है। ये किसी पर आक्रामक टिप्पणी किये बिना भी राष्ट्रनिर्माण की भावना का विस्तार करते हैं तथा राष्ट्र को धरती माता का एक अंग मानते हैं। राष्ट्रभक्ति और विश्वमंगल-भावना का सामंजस्य एक ऐसी प्रवृत्ति है जिसका विश्व के किसी भी भूखण्ड या जनसमूह से टकराव नहीं है और जो सम्पूर्ण विश्व के द्वारा बिना कुछ खोये ग्राह्य हो सकती है। इस दृष्टि के उपस्थापन से राष्ट्रीय-महाकाव्यों की परम्परा में ये दोनों महाकाव्य महत्त्वपूर्ण हैं। आज भी शस्त्रों की होड़ में पागल राष्ट्रों को टकराव छोड़कर सहयोग और लोकसेवा का अमृत सन्देश देते हुए ये महाकाव्य अपनी सार्वभौम प्रासंगिकता सिद्ध करते हैं।

●

## परिशिष्ट

# 'श्रीस्वामिविवेकानन्दचरितम्' के सुभाषित

१. लोकस्थितिर्नियतमत्र सदुद्भवार्थ हेतुत्वमेति भगवान् सुगतोऽवतीर्णः।

नानामतेरतितरां कलहप्रसक्तां निर्वाणमार्गमुपदेष्टुमना जनानाम्। (१/४)

२. जातिः कथं नश्यति पश्यतां नः संपर्कतो हीनजनेन सार्धम्।

स्वर्णं तु सर्वत्र सुवर्णमेव वयं किमुच्चा अपरे च नीचाः। (१/१४)

३. बीजानुरूपो ध्रुवमंकुरोऽपि। (१/१६)

इत्थं विचाराहितमानसेन हितः स्वधर्माम्बुनिधिर्जः।

ईशोऽस्य विश्वस्य परो नियन्ता यन्ता रथस्येव धृताश्वरश्मिः। (१/२६)

४. क्वचित्स्वपुत्रोद्वहनस्य चिन्ता-धारातिमाराकुलितान्तरोऽयम्।

विनात्मजं रोदिति कश्चिदन्यो विधे! कथं निष्करुणं मनस्ते। (१/३०)

५. सरस्सु हंसाः सरसास्तरन्ति तरंगभङ्गैः सलिले चलांगाः।

अम्भोजवृन्दैः परितो वृतानां चेतोहराणां सुषमा समेषाम्। (१/३६)

६. मनोः प्रसूतिः प्रकृतेरपत्यं व्यस्मारि सेयं जननी सुतेन।

अतो नरोऽभून्नु कदर्थनार्हः सुनिश्चितः कर्मफलस्य भोगः। (१/४०)

७. हेतुं विना नो विपदो नराणाम्। (१/४१)

८. समष्टिकल्याणविशिष्टकार्यं व्यष्टेः सुखात्कोटिगुणं गरीयः।

नरं परार्थस्य कणोऽपि सद्यः कृतः कृतार्थैः कुरुते यथार्थम्। (१/४३)

९. विद्यार्थिनां स्याद्विषयोपभोग-योगाभिलाषो विषकल्प एव।

आदर्शमार्गोऽयमदर्शि केनाप्यदर्शितः स्वाचरणेन तेन। (१/४७)

१०. स्वान्तः शमः स्थायिसुखस्य हेतुर्द्वन्द्वापहारेण च शान्तिलाभः।

निर्द्वन्द्वतामेति नरः परेण प्रेम्णा ततः प्रेम सुखस्य तत्त्वम्। (१/४९)

११. आनन्दमेति रुचिरां प्रकृतिं निरीक्ष्य चित्तं नरस्य सुचिरं, विरलास्तु केऽपि।
स्वात्मानमेव नितरां ननु विस्मरन्तः सन्तोऽप्यलौकिकसुखानुभवा भवन्ति। ( २/२ )

१२. जातं समस्तमचिरस्थिति वस्तुजातं मिथ्याखिलं जगदिदं मृगतृष्णिकेव। ( २/९ )

१३. हा! हा! किमर्थमुचितो गमितः प्रसंगः
संगः सतां भवति यत्खलु नः शिवाय। ( २/१९ )

१४. सच्छास्त्रशस्त्रबलशालिनि भारतेऽस्मिञ्ज्ञानार्जनेऽखिलजनाः सदृशाधिकाराः।
नीचोच्चता न खलु जन्मगतो गुणोऽयं स्पृश्योऽयमेष न तथा नहि राष्ट्रलक्ष्म। ( २/३२ )

१५. मूल्यं ज्ञातगुणं रत्नं विज्ञातुर्लभतेऽधिकम्। ( ३/२५ )

१६. सिन्धुः समृद्धिमायातुं चन्द्रोदयमपेक्षते। ( ३/२६ )

१७. वुद्धेर्विकाससिद्ध्यर्थं वृद्ध्यर्थं संविदस्तथा।
विद्यार्थिभिर्विचारस्य स्वातन्त्र्यं समपेक्ष्यते। ( ३/६४ )

१८. शिष्योत्कतावर्त्मनि योऽन्तरायं नोत्पादयेत् क्वापि गुरुः स एव। ( ४/५ )

१९. अद्वैतमायाति गुणैः प्रभेदं नीरं यथा शैत्यवशाद्धिमत्वम्।
नाम्नः पृथक्त्वं खलु सत्यमेकं कुतो विवादावसरप्रसारः। ( ४/१२ )

२०. अम्भोजकदम्बकानां संकोचतश्चन्द्रमसः क्षतिः का? ( ४/१३ )

२१. कार्तस्वरं निर्मलमन्यथा वावगम्यते तत् कषघर्षणेन। ( ४/१७ )

२२. हार्दं यथार्थं त्वविपर्ययं स्यादकृत्रिमं चान्यगुणानपेक्ष्यम्। ( ४/२० )

२३. अलौकिके कर्मणि लौकिके वाप्यद्वैतमुत्सृज्य किमस्ति तत्त्वम्। ( ४/२४ )

२४. अज्ञानतः शुद्धमनाद्यनन्तं चैतन्यमेकं द्विविधं चकास्ति।
व्यस्तं समस्तं न तु वस्तुतस्तद्वनस्य तस्यैव स एव वृक्षः। ( ४/२९ )

२५. ब्रह्माहमस्मीत्यनुभूय पूर्वं तत्त्वं भवस्येवमुदीयते धीः।
अन्योऽयमात्मापि तदेव सर्वं चराचरं ब्रह्म ततोऽवगम्यम्। ( ४/३० )

२६. अविद्यया भूम्नि जगद्विचारो गुणे यथोदेति भुजंगबुद्धिः।
गुणप्रबोधेऽन्तमुपेति सर्पो ज्ञाते गुणे क्वापि जगद्विलीनम्। (४/३१)

२७. . अहं त्वमन्यश्च जगत् समग्रं ब्रह्मेतिबोधेऽनुभवे च सिद्धे।
सुखाम्बुधौ सर्वविकल्पशून्ये निमज्जनं ते भविता परोक्षम्। (४/३२)

२८. सहायतः सिद्धिकदम्बकस्य साध्यं कठोरं सुकरीक्रियेत। (४/५०)

२९. सिद्धिर्भवेद्भगवतोऽवनिविघ्नभूता। (४/५२)

३०. को नु विवेकशीलः शाल्योदनं किल विहाय मृषा तुषार्थी? (४/५२)

३१. शिष्योन्नतिर्न तु विना गुरुतः प्रसादात्। (४/५३)

३२. साध्यं सुखेनास्त्वथवास्तु दुःखात् कार्यं हृदामोदि सशान्ति कार्यम्।
सदुःखचिन्तं हि मनो मनुष्यं साफल्यसंदिग्धविधिं विधत्ते। (५/७)

३३. कदाचिच्छ्रद्धां नरः क्वापि जहाति दुःखात्। (५/२५)

३४. जगच्छिवान्तर्गतमेव सर्वं शिवं यथार्थं सुधियो वदन्ति। (५/३४)

३५. जगत्समग्रं हरिकल्पितम्। (५/५२)

३६. दया न जीवेषु परं परेषु सेवाऽनिशं ते शिवसंविदा। (५/५३)

३७. प्रतीकरूपो हि नरः शिवस्य बीजं महज्जीवरहस्यसेवा।
लोके मतानां च समन्वयस्य भ्रातृत्व-मैत्री-समता-गुणानाम्। (५/५६)

३८. अस्माभिः सह मानवाः प्रतिदिनं सम्बन्धमायान्ति ये
येषु स्नेहपरा वयं जगति नो येऽभ्यर्चनीया पुनः।
ते सर्वेऽप्यतिशुद्धबुद्धशिवसद्रूपा इति प्रज्ञया
संसेव्या हृदयेन सन्ति जनुषो ध्येयं मया निश्चितम्। (५/५७)

३९. यावज्जीवसमष्टिकारणवशादेको महाकाशवद्
यावद्वर्णविभिन्नजातिषु ततो यो दीनहीनेषु च।

यो दुष्टेषु च दुःखितेषु च पुनर्व्याप्तः समानोऽनिशं

तस्याराधनकर्मणा जनिततौ शान्तिं समीहे भृशम्। (५/५८)

४०. दिक्षु शान्तिसुखविश्वबन्धुताऽभेदसाम्यकरुणाप्रचारकैः।

त्यागिभिश्च परदुःखदुःखितैर्धार्यते यतिभिरीदृशैर्मही। (६/१०)

४१. शास्त्रपुस्तककदम्बकं कदाप्यन्तरंगरतये न कल्पते। (६/२०)

४२. धनाभावः सोद्यमानां नान्तरायः परं पथि। (७/२)

४३. सद्यः श्रीर्जुषते धन्यान् निःस्वार्थश्रमकारिणः।

सतां सा हि गुणैः कृष्टा समुद्योगमपेक्षते। (७/३)

४४. कार्ये धर्मो न जातिषु। (७/४२)

४५. सतृष्णा धीः कस्य न स्याद् वीक्षितुं सुमनोमयम्।

प्रभवं पुण्यसरितां सर्वरत्नधरं गिरिम्। (७/७४)

४६. परेश्वरश्चेत् प्रतिमासु पूज्यते न सार्चना कुत्रचिदश्मनां भवेत्।

प्रति प्रतीकं हरिरस्ति चिन्मयः प्रतीकपूजापचितिः परा हरेः। (८/२६)

४७. स सर्वगोऽखर्वबलो विलोक्यते बुधैर्हृदि ज्ञाननिधिर्निरन्तरम्।

परास्य शक्तिर्विविधेह दृश्यते जनिस्थितिध्वंसविधौ पटीयसी। (८/२७)

४८. सदागमस्पर्शमणिप्रभावतः प्रयात्यथोऽसन्ननु कांचनच्छविम्। (८/२८)

४९. द्विजातयो यस्य परिश्रमान्निजं गुरुत्वमैश्वर्यमथार्थसंचयम्।

अलं बभूवुः परिरक्षितुं क्षितौ कथं स शूद्रो दलनास्पदं बत। (८/३३)

५०. अदृश्यतामेष्यति देशकोशतो न यावदेषा दलितोक्तिराक्षसी।

अलं जगत्यां नतमुन्नतं शिरो निजं विधातुं किमु भारतं भवेत्? (८/३४)

५१. कथं सदालोकशिवेककामिनां वचांसि यान्ति व्यभिचारितां सताम्? (८/३९)

५२. अयो हरेः स्यान्मृगयोर्गृहेऽथवा न हेम किं स्पर्शमणिप्रभावतः। (८/४१)

५३. विपत्प्रतीकारकृतो वरं मृतिः स्तरं नृणामुच्चतरं विधास्यतः। (८/४५)

५४. अतीन्द्रियज्ञानसमुद्भवश्चिरात् स्थिरान्तरंगाखिलदर्शनप्रसूः।
इदं पदं नः किल बन्धुभावदं स्थितं तदैतस्य हिते जगद्धितम्। (८/५३)

५५. अभून्न भूमौ यवनीयसभ्यता प्रवृत्तिरासीन्न च रोमसंस्कृतेः।
असभ्यतामन्वभवन् परे यदा तदास्म नूनं शिखरे समुन्नतेः। (८/५४)

५६. सुधामयज्ञानसुधाम भारतं रतं हितार्थं वसुधातलेऽखिले।
इतः सदादर्शपरम्परा पुराऽनिशं भृशं सद्भिरितस्ततस्तता। (८/५५)

५७. अनादिकालान्मणयो यथाकरात् समानतासख्यदयादयो गुणाः।
इतो धरायां प्रसृता अनारतं मतं जगच्छान्तिकृते हि भारतम्। (८/५६)

५८. अखण्डितज्ञानप्रवाहहेतवो न शंकराद्याः किमु ते यतीश्वराः। (८/६२)

५९. अधोगतिर्धर्ममहोदधेरहो! समग्रमार्यं बत कुर्वतो जगत्।
परान् प्रति'म्लेच्छ' इतीरणादभूद् भुवो ध्रुवं नोऽवनतेरुपक्रमः। (८/७६)

६०. सार्धं निःश्रेयसेनाभ्युदयो हि धर्मः। (९/११)

६१. सह्या न कानर्थपरम्परा चेदर्थो निदेशेन गुरोः शिवेन। (९/३४)

६२. आर्याः! समुत्थाय नवामधीध्वं विद्यां परां प्रत्नतरां ददानाः।
आदानदानाभिधवर्त्मनीत्थं परस्परानन्तशिवे निदानम्। (९/१८)

६३. निरस्य नीचैस्त्वरितं स्वकूप-मण्डूकवृत्तिं भवतात्युदाराः।
कल्याणकामा यदि मातृभूमेः स्निग्धास्तथा मानवजातिवृन्दे। (९/१९)

६४. सहस्रशः सोद्यमधीरवीर-सुतानियं भारतजन्मभूमिः।
प्रतीक्षते स्वात्मबलिं विधित्सन् समुज्झितानन्तसुषुप्तिदोषम्। (९/२०)

६५. शिक्षाप्रसारेण निजार्थशून्यान् नरान् विधातुं पशुतुल्यबन्धून्।
दीनेषु नित्यं समवेदनांकाः क्षुत्पीडितान् भोजयितुं यतध्वम्। (९/२१)

६६. प्रकाशदानेऽधिकृतोऽस्ति भास्वान् न वेति कोऽज्ञः कुरुते समीक्षाम्। ( ९/३८ )

६७. पावित्र्यं निर्मलत्वं सुकृतिततिरतिः सर्वभूतानुकम्पा
धर्मस्यैकस्य सम्पन्न खलु समभवत् किन्तु सर्वत्र सन्तः।
अन्ये लुप्यन्तु धर्मा मम भवतु पुनः सर्वधर्मप्रधानो
यद्येवं कोऽपि वांछत्यखिलजनदयापात्रमेतं धिगस्तु। ( १०/१० )

६८. धर्मो नः समदृष्टिरध्वसु समेष्वास्तेऽनिशं सादरः
स्वस्थानाद्रिपुभीतिविद्रुतनृणां जातः शरण्यो महान्।
ग्रीकान् हूणशकान् प्रभाववशतः पूर्व चकारात्मसात्
किं कर्तु प्रभवेत् कदापि शशकः शार्दूलविक्रीडितम्। ( १०/१४ )

६९. धर्मा अभिधानैर्भिन्नाः प्रभवन्ति स्थानं गमनीयं तेषां परमेकम्।
गम्यो मनुजानामेकः खलु देवो यद्वत्तटिनीनां वारांनिधिरेकः ( १०/१६ )

७०. विद्वेषः सम्प्रदायेष्वतिमलिनमतिः कूपमण्डूकवृत्ति-
र्धमान्ध्यं व्यर्थ-कर्माण्यनुचितविनयोऽन्योन्यसंघर्षतर्षः।
श्रेयान् स्वार्थो नितान्तं विषविषमफलः सर्वतश्चाविवेको
रक्षांस्येतानि चक्रुश्चिरतरमवनिं पंकिलां रक्तपातैः। ( १०/१८ )

७१. तदधिकमुदयं समीहमानै रजनिचरो मतवैरितास्वरूपः।
सपदि नरवरैर्विनाशनीयः फलति यतः समये कृतः प्रयासः। ( १०/२१ )

७२. प्रत्यक्षं शाश्वतं यत् प्रकटयति पुनर्जीवितं मानवानां
ज्ञानादज्ञानसान्द्रं पशुमपि मनुजं द्राक्करोति प्रभावात्।
तं साक्षादीश्वरे यं विपरिणमयति स्वेन्द्रजालादिवान्ते
धर्मः किं किं न कुर्याज्जगदुपकृतये कल्पवृक्षेण तुल्यः। ( १०/२६ )

७३. ध्रुवं धर्मस्येयं प्रसरति पुरोच्चैः शिखरिणी

द्रुतं कीर्तिर्मन्ये धवलयति पूर्णा च जगतीम्।

न वा हिन्दुः खिस्तो न च पुनरयं मुस्लिमपथो

न बौद्धो वा तेषां प्रभवति समष्टिः पुनरसौ। ( १०/३० )

७४. अति वेगवती खलु वीचिः साम्यरसैर्नवधर्मपयोधेः।

अधुना न महीमखिलां किं प्लावयितुं परितो भविताऽलम्। ( १०/३१ )

७५. धर्मोऽयं प्रसृतयशा जवान्नवीनः सर्वेषामपि भविता नृणामभीष्टः।

जायेताखिलजगती प्रहर्षिणीयं वाण्येषाऽरमवितथा भवेन्नितान्तम्। ( १०/३२ )

७६. इह हि मनुजस्यान्त्यं लक्ष्यं जगत्पतिरुच्यते

विषयपदवीमध्यारूढोऽमृतं न समश्नुते।

अनुमृगतृषं धावन्ती काऽप्नुते हरिणी जलं

प्रभवति महान् धर्मो नेतुं नरं परमं परम्। ( १०/३३ )

७७. धर्मं विना विश्वसमाजवर्गो भवेदरण्यं पशुभिर्विकीर्णम्।

भोगा विलासा न मनुष्यधर्मा ज्ञानं परं जीवनलक्ष्यमुच्चैः। ( १०/३५ )

७८. धर्मस्यालौकिकः श्लोकः पशुर्येन नरायते।

नराश्चापीश्वरायन्ते विना धर्मं नरः पशुः। ( १०/३६ )

७९. अधिनरं किल दिव्यरुचैर्बलं निहितमस्ति निरन्तरमव्ययम्।

द्रुतविलम्बितमस्य तु दर्शनं समधिगच्छति धर्मसमाह्वयम्। ( १०/३७ )

८०. नोच्चैर्वादा नापि सिद्धान्तधारा नाप्यस्माकं चारुनानामतानि।

धर्मः किन्तु स्वानुभूतेरवाप्तिः किं चैतस्याः कार्यजाते प्रकाशः। ( १०/३८ )

८१. स्नेहः सम्पूर्णसंसार-स्थितप्राणिषु निर्मलः।

उदारता तथा तेषु धर्मस्य निकषः स्मृतः। ( १०/३९ )

८२. योजकस्तु सुदुर्लभः। ( ११/६८ )

८३. अतः संघमयैर्भाव्यं भारतीयैर्भयातिगैः।

एकवर्णैरेकधर्मैः सबलैरेकजातिभिः। ( ११/७५ )

८४. क्व मानमाप्नोति न विद्यया ना। ( १२/१ )

८५. किमु केवलबाह्यभूषया परमन्तःस्थिरसारशून्यया।

नवसभ्यतया रसातले भविता राष्ट्रसमुन्नतिः क्वचित्? ( १२/३५ )

८६. अनिशं विमलाशयाः प्रयान्त्यभियुक्तं हृदि संशयान्विताः। ( १२/३८ )

८७. विविधैरभिधानलक्षणैः प्रभुरेकोऽपि पृथङ् नमस्यते।

स हि केवल दृष्टिभेदतो लभते रूपभिदा न वस्तुतः। ( १२/४१ )

८८. अयनं खलु भक्तिलक्षणं सरलं स्यादखिलेषु वर्त्मसु।

प्रियमानव-सत्प्रतीकतो बहुधा सिद्ध्यति काप्युपासना। ( १२/४२ )

८९. स हि भक्तिपथश्च संसृति-श्रुतिशास्त्रोद्भवकारणात्मनः।

अतिनिर्मलभावतो हृदि स्वयमन्वेषणमीश्वरस्य यत्। ( १२/४३ )

९०. अभियुक्तगुरोः सहायतो मनुजानामनुभूतिरात्मनः।

विमलान्तरवाक्यकर्मणां नियतं लक्षणमस्य ( भक्तिमार्गस्य ) वर्त्मनः।

( १२/४४ )

९१. बहुशः परिपूर्णसंविदः परमज्ञानिजना मनागपि।

अमुना समुपासनाध्वना विचरन्तो भुवि नावलोकिताः। ( १२/४५ )

९२. परमप्रियतामहेश्वरं मनुजः प्रेममयान्तरीभवन्।

यदि पूजयति ध्रुवं समः समुपास्येन भवेदुपासकः। ( १२/४६ )

९३. सगुणेश्वरमर्चयन्ति ये क्वचिदर्हन्ति न ते तिरस्कृतिम्।

सगुणः खलु मूर्तिपूजकोऽप्यधिगन्तुं सुतरां निराकृतिम्। ( १२/४७ )

९४. गणनातिगजीवखेलने कतिचिज्ज्ञानपराः परेऽबुधाः।
उपदेक्ष्यति बोधपूर्वकं गुरुधर्मः किल केलिमुत्तमाम्। (१२/४८)

९५. इह दार्शनिकाश्च धार्मिका अपि विज्ञानविदो वृथाऽनिशम्।
मरणोपरि जीवितं न वा विषयेऽस्मिन् परितश्चिकित्सवः। (१२/४९)

९६. यदनन्तमनादिजीवनं किमिवास्मिन् भवतां विमर्शनम्।
अमरा वयमत्र मा कृथाः समयस्य व्ययमप्रयोजनम्। (१२/५०)

९७. वयमादित एवं बान्धवा अजरा ज्ञानमयास्तथामराः।
इति साधयितुं न दानवो न च देवः समपेक्ष्यते क्वचित्। (१२/५१)

९८. मतवादभयातिगामिनी मनुजानामनिशं सहायकृत्।
इतरेतरमित्रतोद्भवः परमार्थः खलु संविदात्मनः। (१२/५२)

९९. मतभेदतरंगिणीततिर्निपतन्त्यस्तमितात्मसंस्थितिः।
निजबौद्ध- महाम्बुधावियं चिरमद्वैतमतौ विलीयते। (१२/५३)

१००. हृदयादपनीयतां जगत्क्षणिकावस्थिति पाञ्चभौतिकम्।
अथ तस्य पदेऽनुचिन्त्यतां चिरसच्चित्सुखमात्मगौरवम्। (१२/५४)

१०१. परिभावय जीवसन्ततिर्मयि चाहं सकलेष्ववस्थितः।
न शरीरमनोऽक्षसंचयः सुखदुःखातिगसाक्षिलक्षणः। (१२/५५)

१०२. जगदक्षपथेन भौतिकं नरकाकृत्यथ पापवर्त्मनाम्।
त्रिदिवः खलु पुण्यकर्मणां परितो ब्रह्ममयं चिदात्मनाम्। (१२/५६)

१०३. अविनाश्यपहाय चिन्मयं नहि सत्ता पृथगस्ति कस्यचित्।
किमु सागरतो जलोर्मिभिः क्षणमुत्पद्य पुनर्न लीयते। (१२/५७)

१०४. प्रतिभासवशेन भिन्नता परद्वैतमतो यथार्थता।
प्रतिबिम्बितमीक्ष्यते हि सत् तनुचेतोऽखिलबाह्यवस्तुषु। (१२/५८)

१०५. अनिशं कुरु लक्ष्यमुच्चकै रसदर्थोऽनुशयाय कल्पते।

मृगयुः कुशलोऽन्विषेद्धरिं न शशं गौरवहानिकारणम्। (१२/५९)

१०६. परिहार्यमदो जगद्बुधैरिति शिक्षा यदि संविदध्वनः।

निजकर्मफलस्पृहां विना व्यवहर्तव्यमिदंतयेष्यते। (१२/६०)

१०७. कठिना यदि कर्मशून्यता फलहीना जगति क्रिया वरम्।

नहि नामयशःस्वरर्थिभिः क्रियमाणं खलु कर्मसंज्ञितम्। (१२/६१)

१०८. चरमात्मविकासकारणं भवति स्वार्थपरा नहि क्रिया।

ध्रुवमान्तरिकी समुन्नतिः परलक्ष्यं शुभकर्मवर्त्मनः। (१२/६२)

१०९. समुपैष्युपकारपात्रतामिति बुद्ध्याऽत्र परार्थमाचरेः।

अपरस्य भवान् सहायकृत् स्वयमेवोपकृतोऽस्ति वस्तुतः। (१२/६३)

११०. जगतामधमर्णतां गता यतमानाः परशर्मणे वयम्।

यदि सर्वगतः परेश्वरः प्रभुसेवा परकार्यमुत्तमा। (१२/६४)

१११. परिणामविचारवर्जितं करणीयं निजकर्म साधुभिः।

इयमेव निवृत्तिरुच्यते न च कर्तेह सकर्मबन्धनः। (१२/६५)

११२. परिशान्तसमुत्सुकालसं त्रिविधं कर्म गुणत्रयक्रमात्।

प्रथमं त्वपरद्वयोत्तरं चरमं साधुभिरुच्यतेऽधमम्। (१२/६६)

११३. चिरमुद्यमिनश्चिदागमो मनुजस्यान्तिमसाध्यमुच्यते।

न तु केवलभौतिकात् सुखात् प्रकटं ज्ञानमिदं भवेद्ग्रहः। (१२/६७)

११४. शुभकर्मवशात् पशुः स्वयं मनुजत्वं लभतेऽर्हणागुणम्।

मनुजस्त्वशुभक्रियाविधेः पशुतामेति पुनर्न संशयः। (१२/६८)

११५. शिवकर्मकरा नरा दशाऽप्यलमेतुं जगतीजिगीषुताम्।

अलसास्त्वितरे सहस्रशः परिहर्तुं सबला न मक्षिकाम्। (१२/६९)

११६. सत्यानुसन्धानकृतां कृते यथा वेदान्तविद्योपनिषत्प्रकाशिता।
पन्थानमिष्टं सरलं समादिशेत् तस्योपमा क्वापि न सत्यमुच्यते। ( १३/२२ )

११७. नवा युवानः कतिचिद्दृढव्रताः कुर्वन्ति वेदान्तमयं भुवस्तलम्। ( १३/२४ )

११८. जागर्ति चेन्नः समये न भारतं प्रचारयिष्यन्नवविश्वबन्धुताम्।
अशिक्षिता जन्यरता नराः क्षितौ क्षतां विधास्यन्त्यपि मातरं भुवम्। ( १३/२५ )

११९. साम्राज्यमेतद्‌वलवत्पुरा बभौ प्राचेतसी दिक् सकलाऽस्य विस्तृतिः।
लोकोक्तिरेषा प्रसृता च सर्वतः प्रयान्ति मार्गाः किल रोमपत्तनम्। ( १३/३६ )

१२०. संघबलस्य नोपमा। ( १३/४३ )

१२१. इस्तंवुलं नाम पुरं पुरातनं तुर्कीयशक्तेरवशेषखण्डकम्।
सन्दर्शयत्यन्यधरापहारतो स्वकीयमप्येति विलोपनं क्षणात्। ( १३/४५ )

१२२. द्यौरुत्तमा भारतभूर्ममानिशं सा मत्कृते तीर्थमिवास्ति मंगलम्।
अस्याः पुनर्धूलिकणो नमस्यतां प्राप्तः। ( १३/४९ )

१२३. कस्यान्तरं न भविता सवितारमुग्रैः पूर्वां दिशं पुनरुपेतमुदीक्ष्य तुष्टम्।
रात्रौ प्रसुप्तमखिलं किल जीवजातं स्वस्वेषु कर्मसु नियोजयितुं पुरस्तात्। ( १४/१ )

१२४. धर्मः प्राण इवास्ति भारतभुवस्तस्यैव वृत्तिर्मया
पाश्चात्त्ये जगति प्रकाशिततराऽस्याज्ञानमुद्रावृत्ते।
चेद्वेदान्तविशेषणपान्वितया धन्योऽयमालम्ब्यते
जीवेद्राष्ट्रमिदं सहस्रशरदो विश्वस्य शिक्षाकरम्। ( १४/१३ )

१२५. को भारतस्य महिमानमनन्तशक्त्या युक्तस्य पूर्णमिह वर्णयितुं समर्थः।
धर्मोऽस्त्यमुष्य तु गुरुत्वनिदानमेकं धर्मेण शून्यमिदमेति परासुभावम्। ( १४/१४ )

१२६. का पुण्यभूः समुचिता जगतीतले स्मिन् किं स्थानमत्र परमेश्वरलाभसिद्ध्यै।
नृणां च कर्मफलभोगपदं किमास्ते तत्रोत्तरं शृणुत भारतभूरियं नः। ( १४/१५ )

१२७. धर्मस्यावासभूमिः प्रभवपदमिदं नित्यशो दर्शनानां

नानावीरैः सुधारैरविरतमवनात्स्वस्ति कालादनादेः।

विश्वप्रेमप्रकर्षः प्रकृतिमधुरिमा मार्दवं भावनानां

एभिर्लोकस्य कर्तुं प्रभवति सततं नेतृतां भारतं नः। ( १४/१७ )

१२८. धर्मोऽवलम्बः किल भारतस्य न राजनीतिर्न समाजनीतिः।

अध्यात्मसंविद्ध्रुवमस्य संपद् विश्वं तयैवोपकृतं कृतं स्यात्। ( १४/१८ )

१२९. किमाशु मिहिरं विना हरति कोऽपि नैशं तमः? ( १४/२५ )

१३०. उच्चैर्वचो ब्रूहि सधैर्यगर्वो भ्राता मदीयः खलु भारतीयः।

स ब्राह्मणो वास्त्वथवास्तु शूद्रो स निर्धनो वास्तु निरक्षरो वा। ( १४/२९ )

१३१. ऊर्जस्विकालायसनिर्मिताभिर्वज्रं वपुः स्नायुशिराभिरस्तु।

सैवार्थमस्मत्प्रियमातृभूमेरीहाबलं चास्तु यदद्वितीयम्। ( १४/३१ )

१३२. बलं जीवनं दुर्बलत्वं च मृत्यु-र्बलं शाश्वतं स्यादलं सिद्धिबीजम्।

बलं सौख्यकृद् दुर्बलत्वं च दुःखं बलान्यर्जयध्वं बलान्यर्जयध्वम्। ( १४/३३ )

१३३. कालोऽयं कठिनश्रमस्य भवतो भ्रातर्वचः श्रूयता-

मुत्थाय क्रतुमारभस्व समये मन्येऽतिनिद्रं तव।

माता प्राप्तनिजासना बलवती तन्द्राभिभूता मनाक्

तस्या आयतिरुज्ज्वला परमसौ युष्मत्प्रयत्नाश्रया। ( १४/३४ )

१३४. आयान्तु मित्राणि! भवन्तु वीरा बहिर्विनिर्गत्य निजान्धकूपात्।

विधाय दृष्टिं परितो विशालां पश्यन्तु राष्ट्राणि कथं प्रयान्ति। ( १२/३५ )

१३५. उत्तिष्ठ सम्प्राप्य वरान्निबोध। ( १४/३९ )

१३६. शारीरिकीं मानसिकीं त्यजेः स्वामाध्यात्मिकीं वा बलहीनतां त्वम्।

ब्रह्माण्डमालोड्य रहस्यभेदं कर्तुं प्रचण्डा भवतोऽस्तु शक्तिः। ( १४/४० )

१३७. न भारतं राजगृहेषु विद्यते ससौख्यसम्पद्धनिमन्दिरेष्वपि।
तदस्ति दीनाथमदुःखितालयेष्विदं भवद्भिर्हृदयेन सेव्यताम्। ( १४/४९ )

१३८. सांसारिकेषु विषयेषु भवन्त्यसुज्ञा निःस्वा जनास्तदपि दुर्जनताविहीनाः।
ते सन्ति शुद्धहृदयाश्छलशून्यभावा हिंसाविचाररहिता हितकार्यसक्ताः। ( १४/५० )

१३९. निम्ना जना उच्चनिपीडनेन त्रस्ताः स्वकीयैरपमानिताश्च।
चिरात् स्वकार्यप्रसितास्तथापि श्रमस्य नापुः फलमद्य यावत्। ( १४/५१ )

१४०. न केवलं मूर्तिषु विद्यते शिवः परं दरिद्रेषु च दुःखितेषु च।
शुभाकृतिनिर्मल! तत्कृते कृता समर्चनासारमतोऽवधार्यताम्। ( १४/५२ )

१४१. ईशः स्थितो दलितदुर्बलदुःखितेषु येऽर्हन्ति सेवनमलं प्रियबान्धवास्ते।
सेवस्व तान् मृगयसे कथमन्यमीशं गंगातटे खनितुमिच्छति कोऽपि कूपम्। ( १४/५३ )

१४२. दुर्भिक्षदुःखगदपीडितलोकशोकं कर्तुं प्रयात भुवने भुवनेशतुष्ट्यै।
प्राणव्ययादपि जनाः सुखिनः क्रियन्तां जाता हि पश्यत वृथा शतशो म्रियन्ते।
( १४/५४ )

१४३. देशे जनाः सन्ति सहस्रशोऽन्ये शिक्षाविहीनाश्च बुभुक्षिताश्च।
अर्थेन तेषां यदि शिक्षिताः स्मस्तदा कृतघ्नान् खलु धिग्धिगस्मान्। ( १४/५५ )

१४४. सनीतिधर्मेण रमाधिगम्यते श्रिया तया त्यागविधिर्विधीयते।
त्यागेन लाभो यशसः सुनिश्चितः सनीतिधर्मो हि निदानमुन्नतेः। ( १४/५६ )

१४५. धर्मस्त्वलौकिकोपायः पशुर्येन नरायते।
नराश्चापीश्वरायन्ते विना धर्मं नरः पशुः। ( १५/१९ )

१४६. अवाप्य ज्ञानमीशस्य चिन्तनं तस्य नित्यशः।
प्रत्यक्षं तेन संभाषा प्रोच्यते धर्मलक्षणम्। ( १५/२० )

१४७. त्यक्तनिद्राः समुत्थायारभध्वं कार्यमुत्तमम्। ( १५/२५ )

१४८. दिव्या शक्तिरनिर्वाच्या वर्तते मानवेऽनिशम्।

दरिद्रेषु तथेशस्य निवासोऽपि मतः पुनः। (१५/२७)

१४९. कार्यक्षेत्रं तु सर्वत्र सेवाकर्ता सुदुर्लभः। (१५/३८)

१५०. संघशक्तिं विनाद्यत्वे कार्यं किंचिन्न सिद्ध्यति।

अस्माभिः संहतैर्भाव्यमतो निः स्वार्थबुद्धिभिः। (१५/४३)

१५१. विविधा राजनीतिर्हि सेवा लोकस्वरूपिणी। (१५/५२)

१५२. चेच्छुद्धं हृदयं सेवाभिलाषा बलवत्तरा।

धनाभावो न बाधेत विश्वसत्कार्यसाधनम्। (१५/५३)

१५३. स्वार्थहीना नृणां सेवा यावदास्ते भुवस्तले।

तावदीर्ष्याकलिद्वेषदोषाणां नास्ति सम्भवः। (१५/५५)

१५४. प्रतिष्ठितश्चारुशरीरमन्दिरे त्वयादिदेवः सततं निषेव्यताम्।

प्रभुर्न चेत्त्वं प्रभुमत्र सेवितुं प्रयोजनं तेऽस्ति किमन्यमन्दिरैः। (१५/५६)

१५५. उच्चैः स्थितः करगृहीतपणो विनोदाद् मा ब्रूहि भिक्षुक! गृहाण दयापरोऽहम्।

दाता भवत्युपकृतोऽत्र परं ग्रहीत्रा सौभाग्यमेतदिह ते स्वसहायकर्तुः। (१५/५८)

१५६. आस्ते जीवनमेव भंगुरमिदं तुच्छोऽभिमानस्तथा

यत्सांसारिकभोग्यजातमखिलं नानाविलासान्वितम्।

यो जीवेदपरार्थसाधनकृते तस्यैव शान्तिः परा

प्राणन्तोऽपि मृतोपमाः खलु नरा ये स्वार्थिनः केवलम्। (१५/५९)

१५७. स्नेहस्त्वदीयहृदये नरजातिमात्रे चेद्विद्यते सुहृदये! निजजन्मभूमौ।

आयाहि गन्तुमनिशं पुरतो न पश्चाद् यत्नं विधातुमिह सत्तमलक्ष्यसिद्ध्यै। (१६/२)

१५८. उत्थाय धारय धुरं त्वरितं जगत्यां जानासि जीवितमिदं क्षणभंगुरं ते।

जातोऽसि यत्किमपि लक्ष्म भवेत्त्वदीयं जाताः स्थिताः कति न वा पशवो म्रियन्ते।

(१६/३)

१५९. देशस्य वन्धहरणे जगतश्च मुक्त्यै कार्यं प्रयत्नशतमात्तभरोत्तमांगैः।
यज्ज्योतिरात्मनिहितं तदुदेतु नित्यं वेदान्तभाः प्रतिगृहं प्रविशत्विदानीम्। ( १६/४ )

१६०. आयाति याति ननु पार्थिवजीवनं नो नित्यानि किं विभवमानयशःसुखानि? ( १६/५ )

१६१. आप्लावितं प्रथममस्तु विशुद्धभावैराध्यात्मिकैर्निखिलभारतमुन्नतं नः।
पश्चात् समाजगतमस्तु मतं तथैव यद्राजकीयजगदस्ति तदप्युपेक्ष्यम्।
( १६/६ )

१६२. तूष्णीं रहः सपदि सिक्ततुषारसम्पत्संपर्कतो रुचिरपाटलकुड्मलानाम्।
नित्यं विकास इव, विश्वविचारधारासम्प्रेरिता भवति भारतभाववृन्दैः। ( १६/७ )

१६३. श्रद्धत्त यूयमनिशं मम वीरमित्राण्यत्रागमानि जगतः शुभकार्यहेतोः।
क्षुद्रश्वशब्दवशतः कुलिशक्रमाद्वा निःसाध्वसा जगति कर्म निजं कुरुध्वम्। ( १६/९ )

१६४. सर्वेऽप्यशक्तिवशतः प्रभवन्ति दोषा हेतुत्वमेति दुरिताचरणेऽप्यशक्तिः।
स्वार्थस्य मूलमपि मानसदुर्बलत्वं तेनैव लोकनिवहः कलहं प्रवृत्तः। ( १६/१० )

१६५. भातर्वृथा नयनतः स्रवदश्रुपातस्त्वय्येव नास्ति सततं निहितं वलं किम्।
शक्त्या स्वया परिचितः परया भवेश्चेज्जायेत विश्वमखिलं भवदंघ्रिलग्नम्। ( १६/११ )

१६६. सौहार्दभावविभवैः सबलैर्मनुष्यैः सत्यानुरागविमलैरधुनास्ति कार्यम्।
कार्यं क्रियेत शुचि दाम्भिकवञ्चकैः किं तस्मात्सखे! जगति दर्शय पौरुषं ते।
( १६/१२ )

१६७. सीमातिगो भवति धैर्यसमुद्यमश्चेत्कार्यक्षमत्वगुणमेलनवीर्यवन्तौ।
आज्ञाकरत्वपरिपुष्टतमो भवेतां राष्ट्रस्य तद्गतनरस्य च कीर्तिहेतुः। ( १६/१३ )

१६८. नित्यं वयं दृढतया पुरतो व्रजामः कोऽपीह वर्त्मनि पतेदपरोऽभ्युपैति।
व्यक्तेर्बलं यदि च तत्परता स्वलक्ष्ये त्वां च्यावयेत्क इव निश्चितकार्यमार्गात्।
( १६/१५ )

१६९. आत्मेव नित्यमचलस्थिति भारतं नः शुद्धं प्रबुद्धमभयं परमद्वितीयम्।
आद्यन्तशून्यमजरामरमप्यमेयं देशस्य तस्य बलिनस्तनया वयं स्मः। ( १६/१६ )

१७०. एतादृशस्त्रिभुवने किमु कोऽस्ति देशो नाशिक्षि येन भरतावनितश्चरित्रम्।
नापीह कोऽपि जगति प्रथितोऽस्ति धर्मो येनात्मनो न परतत्त्वमितो गृहीतम्।
(१६/१७)

१७१. त्यागात्मिका जगति भारतवैजयन्ती गृह्णन्ति यां दृढतया जनिभूसुपुत्राः।
उच्चैरुवाच पतनोन्मुखराष्ट्रजातं नीतिं समाचर दुरात्मतया तथालम्। (१६/१९)

१७२. आध्यात्मिकानुभव एव भवत्समाजे रक्तप्रचार इव निर्मलजीवनस्य।
ओजोऽन्वितो भवति यावदसौ प्रवाहः निष्कण्टको भवति तावदयस्य पन्थाः।
(१६/२०)

१७३. सामाजिकादिविविधेष्टतराः सुधारा आभ्यन्तरात्मबलसत्परिणामरूपाः।
अन्तःप्रभा यदि पुनर्विकसन्मयूखा जायेत सुन्दरतमः सकलः समाजः। (१६/२१)

१७४. साधारणेष्वथ पुनर्वनितासमाजे शिक्षासमः किमपरोऽस्ति परोपकारः।
विद्याबलं प्रसृतमाशु यदा प्रतीच्यां लोकोन्नतिः समभवत्परितस्तदानीम्। (१६/२२)

१७५. या स्वावलम्बपदवीं न ददाति शिक्षा 'शिक्षा' भिधानमधिगन्तुमलं कथं सा।
शिष्योऽधिशालमधुना विषयप्रकीर्णोऽजीर्णामयेन भवति क्रमशो विशीर्णः। (१६/२३)

१७६. संसारमंगलमसंभवमेव भाति शिक्षोन्नतो न भविता महिलागणश्चेत्।
वैहायसाध्वनि खगाः परिपुष्टदेहाश्छिन्नैकपक्षतिरयाः कथमुड्डयन्ते। (१६/२४)

१७७. पाश्चात्त्यकृत्यनुकृतिर्यदि भारतस्य नारीजनेन विहिता त्यजता स्वलक्ष्यम्।
ताभिः सहैव भविताऽवनतिर्नराणां सर्वो भविष्यति पुनर्विफलः प्रयत्नः। (१६/२५)

१७८. स्वोपज्ञमार्गगमना महिलाः स्वकीयाः कुर्वन्तु वज्रकठिनाः सरलाः समस्याः।
तासां समुन्नतिकृते न परे यतन्तां किं भारतीयललना न पुनः समर्थाः। (१६/२६)

१७९. नारीकृते किमपि तैः कुशलं कृतं किं निन्दन्ति ता यदनिशं पुरुषा वृथैव।
क्षिप्ताः परंतु ललनाः स्मृतिकारबालैः स्वातन्त्र्यहीनचरणा नरकस्य पन्थाः। (१६/२७)

१८०. नृणां समुन्नतिकथा भविता वृथैव विद्यां विनैव जननी यदि साद्यशक्तिः।
इत्येव हेतुवशतः किल रामकृष्णैर्देवी कृताऽथ महिता सहधर्मिणी स्वा। (१६/२८)

१८१. सत्कर्मपुंजनिषधेश्वरधर्मपत्नी सीता रघूद्वहसती जनकात्मजा च।
मद्रेश्वरस्य दुहिता यमतोऽप्यभीता आदर्शरूपललनाः स्मर भारतीयाः।( १६/२९ )

१८२. चेदस्मदीयपरिशुद्धतरे समाजे सीतासमा निरुपमा महिला अभूवन्।
जानाति किं न वनिताऽपचितिं स कर्तुं यः सद्गुणी भवति सोऽन्यगुणानवैति।
( १६/३० )

१८३. आसन् पुरात्र सकला अधिकारवत्यो ज्ञानार्जनेऽद्य वनिताः किमु वंचिताः स्युः।
यद्वत्कृता द्विजगणैर्वहिरन्त्यवर्णा तद्वत् स्त्रियोऽपि हुतसर्वबला वृथैव।( १६/३१ )

१८४. स्त्री ज्ञानभक्त्युभयलब्ध्यधिकारशून्या शास्त्रे क्वचिन्न विहितं वचनं तथापि।
सीतापदांकसरणीमनुसृत्य शुद्धां सात्मोन्नतेरनुसरेत् सुविशुद्धमार्गम्।( १६/३२ )

१८५. जातान्यजातिषु जगत्यमितोन्नतिर्या सा योषितां किल सुयोग्यपदस्य लाभात्।
याधोगतिश्चिरमभूदिह भारतेऽद्य सा शक्तिरूपमहिलासु निरादरेण।( १६/३३ )

१८६. भ्रातस्त्वमेहि बलवाननुभूय 'सोऽहं' भस्मीभविष्यति मनोमलिनत्वमस्मात्।
जागर्ति शक्तिरनिशं त्वयि या प्रसुप्ता त्वं च प्रचण्डबलमूर्तिरिव स्वयं स्याः।
( १६/३४ )

१८७. आचारवान् भव सुहृद्बलवान्कृतान्तस्याह्वानतोऽपि गतभीरमलान्तरस्त्वम्।
व्यर्थैव धार्मिकविवादपरम्परा ते दुष्कर्मजातमिति कातरकार्यमेतत्।( १६/३६ )

१८८. ज्ञानं परं प्रतिगृहं प्रविशेदितीत्थं चक्रं प्रवर्तयितुमिच्छति मानसं मे।
येन स्त्रियश्च पुरुषाश्च जगत्यमुष्मिन् स्वाभीष्टनिर्णयविधिं परिभावयन्तु।( १६/३८ )

१८९. त्वत्सम्मुखो विविधरूपधरो य ईशस्तं संत्यजन् नु कुह मार्गयसे वृथैव।
यः स्नेहतत्परमनाः खलु जीववृन्दे जानाति सेवितुमसावनिशं परेशम्।( १६/३९ )

१९०. दिक्कालकार्यकरणादिकमेव सर्वं जानीहि मित्र! बहिरावरणं न सत्यम्।
अस्मीन्द्रियादपि परो मनसो विचाराद् द्रष्टाऽखिलस्य जगतः खलु साक्षिरूपः।
( १६/४० )

१९१. द्वैतं बहुत्वमसदस्ति सदेकमेव मय्येव विश्वमखिलं ह्यहमेव सर्वम्।
द्वेषो न चास्ति मयि नापि विभिन्नभावो मत्तो यतोऽस्मि न परं प्रियतामयोऽहम्।
(१६/४)

१९२. स्वप्नं त्यजेस्त्वमिह बन्धनमुक्तिहेतोर्गूढं निबोध तव नास्ति भयावकाशः।
छाया ममैव किमु साध्वसकारणं स्यात् सोऽहं न चान्यदिति चिन्तय नित्यमेव।
(१६/४२)

१९३. भूस्वर्गलोकनिरयान् सदसच्च चित्तं चित्रं सदा वयति नैकविचारसूत्रैः।
विस्तार्य कंचुकमिव स्वमसत्यजालं तेषामुपर्यथच तानि दृढं गृहीत्वा। (१६/४३)

१९४. पूर्वं दिवाकरनिशाकरजन्मतोऽपि प्राग्धूमकेतुगणतारकवृन्दसूतेः।
दिक्कालयोरपि यदा न जनिस्तदानीमासं तदास्मि भविता नियतं पुरस्तात्। (१६/४४)

१९५. भूः शोभना किरणभास्वरभास्करोऽपि चन्द्रः प्रकाशमधुरो वियदुज्ज्वलं च।
हेतोरधीनमखिलं विचरत्यभीक्ष्णं बन्धेन जीवति पुनर्विलयं प्रयाति। (१६/४५)

१९६. देवोऽपि नास्मि मनुजो न पशुस्तथाहं नारी न चास्मि न पुमान् न मनः शरीरम्।
शास्त्राणि विस्मयपराणि मम स्वरूपं नालं प्रकाशयितुमद्य यतोऽस्मि सोऽहम्।
(१६/४६)

१९७. कोपाहितभ्रुकुटिभंगपदं विहन्तुं कुर्यादपि प्रकृतिरद्य न विस्मरेस्त्वम्।
दिव्योऽसि याहि सुहृदग्रत एव नित्यं नो वामदक्षिणदिशो पुरतस्तु लक्ष्यम्। (१६/५०)

१९८. विकिरतितरां कोऽस्मिल्लोके प्रकाशपरम्परां गतयुगगतो धर्मस्त्यागः पुनः समुदेष्यति।
जगति सदयाः स्वात्मोत्सर्गप्रसक्तहृदो भुवं बहुजनहितश्रद्धा बुद्धाः शतं प्रभवन्त्यपि।
(१६/५१)

१९९. विमुक्त्यै देशस्य प्रयतनपरोऽथास्य जगतो
भव त्वय्येवास्ते शृणु सकलसेवाभरधृतिः।
उदेत्वन्तर्ज्योतिः सततमधिजीवात्मनिहितं
रुचिर्वेदान्तस्य प्रतिगृहमिदानीं प्रविशतु। (१६/५२)

२००. आघातप्रतिघातसंकटशतैरुद्यत्समाजप्रथा-
चाराणां ततिभिश्च संकुलमभूदाक्रान्तमेत्यारिभिः।
आस्ते प्राणबलान्वितं तदपि यत्तुंगाद्रिशृंगोपमं
मन्ये भारतजीवनं खलु जगत्याद्यन्तशून्यं ध्रुवम्। (१६/५३)

२०१. न ज्ञातो ग्रीसदेशो भवदवनितले रोमवार्तापि नासीद्
यूरोपस्थाश्च लोका गहनवनगता दीर्घमासन्नसभ्याः।
ध्वस्तच्छन्नेतिहासं जगदिदमखिलं दुर्बला किंवदन्ती
तत्रासीदुच्चशैलस्थिरतरवसतिः संस्कृतिर्भारतीया। (१६/५४)

२०२. महामहिममण्डिता भवति भारती भूः पुरा
समुज्ज्वलतरा ध्रुवं स समयोऽचिरादेष्यति।
गृहीतजनुषोऽत्र संश्रुतमहर्षयः शान्तिदाः
समग्रजगतो जनान् सुपथगान् विधास्यन्ति ते। (१६/५५)

२०३. धनजीवनसौख्यसम्पदो न कदाप्यात्मसुखार्थमागताः। (१७/८)

२०४. सकलाः परिपीडयन्तु ते सुहृदो मित्र रुदन्तु बान्धवाः।
स्थिरमग्रगतिर्भवान् भवेत् पथि पश्चान्न गतं तवोचितम्। (१७/१६)

२०५. नरतां पशुरेति हिंसको ननु सत्कर्मवशात् प्रशासितः।
पशुतां परमेति मानवोऽनवदातव्यवसायतोऽवशः। (१७/१७)

२०६. भवदात्मविकासकारणं विदितं तत्खलु कर्मसंज्ञितम्।
तव चात्मविघातहेतुकं यदकर्मेति च कोविदैः स्मृतम्। (१७/१८)

२०७. बहिरश्रुयुतं नु भारतं परमानन्दमृतान्तरं पुनः। (१७/५७)

२०८. सन्त्यज्य देवानखिलान् भवद्भिः समाजदेवः सततं निषेव्यः।
अशिक्षितो यावदसौ दरिद्रो भवेत् किमर्थेतरदेवपूजा। (१८/२७)

२०९. घण्टां स्रजो दीपशिखाश्च विद्यामानं तपो मुक्तिकृते विहाय।
भुवि भ्रमन्तः सुहृदो भवन्तो दरिद्रसेवाप्रसिता भवन्तु। (१८/३८)

२१०. अंगं तवैकं यदि पक्षघाताक्रान्तं वपुः सर्वमपार्थमेव। ( १८/४० )

२११. आयान्तु सर्वे दलिता दरिद्राः सर्वेऽप्यभिन्ना वयमीशपुत्राः। ( १८/४७ )

२१२. ईशानुसन्धानपरं यथावन्मे भारतं स्यादमृतस्वरूपम्।
न राजनीतिर्न समाजनीतिर्लक्ष्यं यथार्थं किल जन्मभूमेः॥ ( १८/५१ )

२१३. केचिद् वदन्त्यवनतेः किल कारणं नो व्यर्थं ममत्वमतिपूर्वपरम्परासु।
ज्ञातं मया परमिदं विपरीतमेव त्यागः पुराणविभवस्य महान् प्रभावः। ( १८/५३ )

●

# 'विश्वभानुः' के सुभाषित

१. क्रियैव काम्या खलु धर्मरक्षणे। (१/७)

२. विजित्य मायां हृदि सारदर्शिनः समस्तलोकोदयचोदिताशयाः।
सुदुर्लभा एव विशुद्धनाविकाः सनातने तत्त्वविचारसागरे। (१/९)

३. प्रशस्तपौरस्त्यमहायतीश्वरैरुदाहृतां धार्मिकतत्त्वसंहिताम्।
नवीनशास्त्रप्रसरस्य सोदरः प्रचूर्णयत्युत्कटभौतिकादरः। (१/१०)

४. इदं महच्छास्त्रसरः प्रवर्द्धताम् शरीरयात्रोचितभव्यदायकम्।
कदापि बाधेत न वीतसंसृतिं शरीरिशास्त्रार्चितदिव्यसंस्कृतिम्। (१/११)

५. समन्वितो यत्र नयः सहिष्णुता समागमो यस्य च दर्शनादिषु।
अखण्डसत्यादृततत्त्वसंचयः स एव लोकोद्ग्रथनाय कल्पते। (२१६)

६. प्रपद्यते नाकृतपुण्यवंशजः प्रपंचसत्योन्मुखपद्धतिं सतीम्। (१/२३)
पुत्रं स्वरलकवचोपममाप्तुकामः को वा न काङ्क्षति पिता कुलपालनार्थी। (३/१२)

७. महान्तमुद्योतितसूक्ष्मपाथा प्रपद्यते प्राक्तनजन्मविद्या। (४/२३)

८. समे वयं मानुषकीटराशयः समाः शिवांशस्फुरणैकजीवनाः।
ततः प्रभुत्वेन परेष्वनुग्रहप्रकाशनं साधुधियां न शोभनम्। (८/११)

९. सदा यतन्तां जनशोकनाशने शुभाय सर्वेश्वरसेवने यथा। (८/१२)

१०. विभावयन् विश्वचराचरेषु संस्फुरन्तमात्मानमनन्यचेतसा।
तनोति चेन्मानवसेवनं परं भवेत्तदार्याः स्थिरमात्मलाभदम्। (८/१३)

११. पिण्डाण्डमेतन्निमितप्रमाणं ब्रह्माण्डवत् सृष्टमिति प्रसिद्धम्।
आत्मा यथा मर्त्यतनुप्रविष्टस्तथा परात्मा जगदन्तरस्थः। (११/२१)

१२. यदस्ति लक्ष्यं मनुजेन्द्रियाणां विभाव्यते यत् खलु चेतसापि।
अमूर्तमूर्ते खलु ते निषक्ते इति स्फुटं मे प्रतिभाति तत्त्वम्। (११/२३)

१३. शोकावहो हि गृहिणां स्वजनैर्वियोगः संन्यासिनां तु कृतिनां तनुतेऽतितुष्टिम्। ( १२/११ )

१४. महीयते मानितमात्मविद्याधनं यदार्षप्रभवं प्रसिद्धम्।

तदेव नः संस्कृतिसारभूतं शर्मप्रदं सर्वमनुष्यराशेः। ( १४/७ )

१५. जनाः समे चात्र समा इति प्राग् अवेक्षितं तत्वमुदात्तमार्षम्।

निरस्य सोदर्यसहस्रराशीन् स्वार्थिव्रजोऽधः पतितान् वितेने। ( १४/८ )

१६. अनागसामार्तिविमर्दितानाम् अज्ञानतामिस्रजुषां च तेषाम्।

अधःस्थितिं दैन्यमयीं विचिन्त्य दन्दह्यते मे हृदयं सदापि। ( १४/९ )

१७. धर्मेण किं वाऽत्र बुभुक्षितानाम् इतीरितं यद् गुरुदेवपादैः।

तदप्यहं साम्प्रतमर्थगर्भम् अनुस्मराम्याकुलितान्तरंगः। ( १४/१० )

१८. मतेन नाकार्यपराधलेशः परन्तु तस्याधिकृतैरकारि।

विस्मृत्य धर्मं सहजान् द्विषन्तस्त एव साक्षादपराधमाजः। ( १४/११ )

१९. ज्ञानाङ्गणे तत्त्वविचाररङ्गे तथैव विज्ञानतलेऽपि दीपः।

विवेकशून्यं विकलात्मभिस्तैर्विनाशितोऽस्मज्जनताप्रभावः। ( १४/१२ )

२०. विनष्टमेनं पुनराप्तुमात्मप्रभावमभ्युन्नतिहेतुभूतम्।

संस्कारजीवातुभृतामुपायः को वाऽस्ति धर्मोद्धरणादृते नः। ( १४/१३ )

२१. दुर्दैवभाजां निजसोदराणां समीहितं सेवनमन्तरेण।

मतं कथं स्यान्मतमार्तबन्धुं परं चिराच्चिन्तयतां जनानाम्। ( १४/१४ )

२२. ऋषीश्वरैर्दृष्टमुदारमार्यं सनातनं दर्शनमद्य सन्नम्।

नवीनभाष्यामृतसिक्तमुद्यत्प्रभं शुभं दास्यति मानवानम्। ( १४/१५ )

२३. त्यागश्च सेवा च निमग्नधर्ममन्थाचलोद्धारसमर्थकूर्मौ।

समाश्रितौ तौ नियतं दधाताम् अनन्तमस्मज्जनभागधेयम्। ( १४/१६ )

२४. निरन्तरं त्यागिवराः प्रबुद्धसंन्यासिनश्शिष्यगणैः समेताः।

संविन्मयीं दीपशिखां वहन्तो गृहाद् गृहं यान्तु जगत्प्रदीप्त्यै। (१४/१७)

२५. विदेशराज्येष्वपि दिव्यमस्मद्वेदान्ततत्त्वं प्रचरत्वमन्दम्।

मनीषिभिस्तत्र समादृतं तद् भृशं भवेन्नो बहुमानभूमिः। (१४/१८)

२६. विलीय गंगाम्भसि पांसुलं जलं भवत्यहो! तीर्थमनन्तभव्यदम्। (१५/१८)

२७. आराध्ये प्रेमपात्रे च तस्मिन् महसि भव्यदे।

श्रद्धा बुद्धिविकासाय चारित्राय च कल्पते। (१६/११)

२८. दुर्मतोन्मादिभिर्भूतैर्बाधितेयं वसुन्धरा।

बहुशः शोणितामग्ना व्यथते च्युतसंस्कृतिः। (१६/२६)

२९. अन्यधर्माननादृत्य स्वधर्मैकपरायणाः।

वर्तन्ते निमितप्रज्ञाः कूपमण्डूकवज्जनाः। (१६/२९)

३०. ईप्सितं चेन्मतं किंचित् सर्वलोकसमादृतम्।

देशकालादिभिर्नूनम् अनवच्छिन्नमुत्तमम्। (१६/३१)

३१. सम्यगुप्तं शुभं बीजं पृथिव्यंव्वायुसाह्यतः।

क्रमादंकुरितं पश्चात् सस्यतामधिगच्छति। (१६/४०)

३२. स्वधर्मस्थस्तथा कश्चिद् अन्यधर्मानपि श्रितः।

यतमानः क्रमात् काम्यम् आत्मलाभमवाप्स्यति। (१६/४१)

३३. महान्तः सिद्धिसम्पन्नाः प्रपन्नपरमामृताः।

अजायन्त समस्तेषु नानाधर्मानुवर्तिषु। (१६/४२)

३४. साहाय्यं न च संयत् संयोजनं न च नाशनम्।

ऐकमत्यं च शान्तिश्च न विरुद्धमनोगतिः।

एतान्युत्कृष्टवाक्यानि लिखेयुरचिराज्जनाः।

सर्वधर्मपताकासु सत्यपि प्रतिषेधने। (१६/४६-४७)

३५. धर्मदुग्धोदधेर्घोरमथनाद् विगतावधेः।

वेदान्तामृतमादाय दातव्यं जनराशये। ( १९/६ )

३६. यावत् क्रियासक्तिस्तावत् सेवा। ( १९/१५ )

३७. सर्वभूतेषु सर्वेशं पश्यन् यः सेवतेऽनिशम्।

तस्य सेवा विमुक्त्यर्थसाधनेव भविष्यति। ( १९/१७ )

३८. हस्तः कर्मणि संसक्तश्चित्तं ब्रह्मण्यधिष्ठितम्।

नियतं यस्य तस्यैव जन्म जन्मेति मे मतिः। ( १९/१८ )

३९. यान्त्वधीशाः समायान्तु न वयं तत्र तत्पराः।

निजसंस्कृतिसम्पत्त्या यदि भासेत भारतम्। ( १९/१९ )

४०. धर्मेष्वन्येषु साधूनां सर्वेश्वरकृपार्थिनाम्।

श्रद्धा भवतु संबद्धा केवलं न सहिष्णुता। ( १९/२० )

४१. बुद्धशंकरयोर्माता यतोऽस्मद्भारताम्बिका।

भवितव्यं सुतैस्तस्यास्त्यागसेवासमुत्सुकैः। ( १९/२१ )

४२. बुद्धा विगतमोहं द्राग् उत्तिष्ठन्तु वितन्द्रिताः।

विरामो मास्तु यत्नानां यावल्लक्ष्यमवाप्स्यते। ( १९/२३ )

●

# देववाणी-परिषदा प्रकाशिताः केचन ग्रन्थाः

| ग्रन्थांकः | ग्रन्थः लेखकः | मूल्यम् |
|---|---|---|
| २३. | राधाकृष्णरसायनम् (श्री ओट्टूर उण्णि नम्बूदिरीपादः) | रु० १५०.०० |
| २८. | स्फूर्तिसप्तशती (डा० शिवदत्तशर्मा चतुर्वेदी) | रु० १५०.०० |
| २९. | साहित्यकौतुकम् (पं० टी०वी० परमेश्वर अय्यरः) | रु० १५०.०० |
| ४४. | रसदर्शनम् (डा० रमेशचन्द्र शुक्लः) | रु० १५०.०० |
| ४९. | कूहा (काव्यम्) (डा० उमाकान्त शुक्लः) | रु० ६०.०० |
| ५३. | सारस्वतसमुन्मेषः (डा० विन्ध्येश्वरीप्रसाद मिश्र 'विनयः') | रु० ६०.०० |
| ५९. | अध्यात्मरामायण में अध्यात्म-चिन्तन (श्री त्रिगुणानन्द शुक्ल) | रु० १५०.०० |
| ६४. | लक्ष्मीशतकम् (डा० वरदाचार्य कण्णन्) | रु० ६०.०० |
| ६५. | ऋतम् (उपन्यासः) (डा० केशवचन्द्र दाशः) | रु० ६०.०० |
| ७२. | श्रीगान्धिचरितम् (गद्यप्रबन्धः) (प्रो० चारुदेव शास्त्री) | रु० १५०.०० |
| ७५. | भाति मे भारतम् (काव्यम्) (डा० रमाकान्त शुक्लः) | रु० ११०.०० |
| ८१. | नाट्यसप्तकम् (नाटकम्) (डा० रमाकान्त शुक्लः) | रु० २००.०० |
| ८२. | जय भारतभूमे ! (काव्यम्) (डा० रमाकान्त शुक्लः) | रु० ३०.०० |
| ९१. | भारतजनताहम् (कवितासंग्रहः)(डा० रमाकान्तशुक्लः) | रु० २००.०० |
| ९५. | प्रकाशकिरणावली (पं० प्रकाशचन्द्र मिश्रः) | रु० १००.०० |
| १०७. | श्रीसुन्दरराज-रचनावली (श्री श्री०सुन्दरराजः) | रु० ५००.०० |
| १०८. | भाति मे भारतम् (हिन्दी पद्यानुवाद–कर्ण पाराशर) | रु० १००.०० |
| १०९. | श्रीमद्रामचरितमानसम् (पं० प्रेम नारायण द्विवेदी) | रु० १०००.०० |

११०. श्रीधर भास्कर वर्णेकर-कृत श्रीशिवराज्योदयम् महाकाव्य का साहित्यशास्त्रीय अध्ययन (डा० अभिनव शुक्ल) रु० ८००.००

११२. आयुर्वेदशास्त्रस्य परिप्रेक्ष्ये सत्याग्रहनीति-काव्यस्यानुशीलनम् (डॉ० चन्द्रमौलि शुक्लः) रु० ३५०.००

११३. सर्वशुक्लोत्तरा (कवितासंग्रहः) (डा. रमाकान्त शुक्लः) रु० ५००.००

११४. भाति मे भारतम् (गुजरातीभाषानुवादः डा० मनसुख पी.पटोलिया) रु० १००.००

११५. बीसवीं शताब्दी के उत्तरार्द्ध में आधुनिक संस्कृत नाटक : एक अध्ययन (डा. कल्पना द्विवेदी) रु० ५००.००

११६. निस्यन्दिनी (डा. जनार्दनप्रसादपाण्डेय 'मणिः') रु० २५०.००

११७. कथाञ्जलिः (मूलहिन्दीलेखकः - डा. योगेन्द्रनाथ शुक्लः. संस्कृतानुवादकर्त्री - डा. अर्चना जोशी) रु० २००.००

११८. 'श्रीस्वामिविवेकानन्दचरितम्' और 'विश्वभानुः' (डा. रवीन्द्र नागर) रु० ५००.००


## देववाणी-परिषद्, दिल्ली

आर-६ वाणी विहारः,
नई दिल्ली-११००५९ फोन : २८५६१८४६

**DEVAVANI PARISHAD, DELHI**
**R-6, Vani Vihar, New Delhi-110059.**
**Phone: 011-28561846**
**devavanipd@gmail.com**
**arvacheenam@gmail.com.**

# ममता

**मूलहिन्दीकथाकारः- जयशंकरप्रसादः**

**अनु.- रमाकान्तपाण्डेयः**

निदेशकः, मुक्तस्वाध्यायपीठम्, राष्ट्रियसंस्कृतसंस्थान, नव देहली

रोहताश्वदुर्गस्य प्रकोष्ठः, तत्र शोणनद्याः तीक्ष्णं गभीरं च प्रवाहं पश्यन्ती उपविष्टा युवती ममता। शोणनद्या उत्तालतरङ्ग इव तरङ्गायते ममताया यौवनोन्मादः। मनसि वेदनां मस्तके तानवं चक्षुषोश्च जलवृष्टिं धारयन्ती सा सुखस्य कण्टकशयने वैक्लव्यम् अनुभवति स्म। ममता रोहताश्वदुर्गाधिपतेर्मन्त्रिणश्चूडामणेः एकला पुत्री आसीत्, अतो न तस्याः कृतेऽभवत् कदाचिदपि कश्चन अभावः। किन्तु सा आसीत् पतिहीना विधवा। हिन्दूनां समाजे विधवा संसारस्य आश्रयविहीनः तुच्छश्च प्राणी भवति। अतो ममताया विडम्बनानां न क्वचिदपि आसीद् अन्तः।

चूडामणिः निःशब्दं तस्याः प्रकोष्ठे प्राविशत्। ममता शोणनद्याः प्रवाहे, तस्याः कलकलनादे स्वजीवनम् एकीकर्तुं व्यग्रा अभवत्तस्मिन् काले। तत्र तन्मयतां प्राप्ता सा पितुरागमनं न ज्ञातवती। तद्दृष्ट्वा चूडामणिः अतीव दुःखमन्वभवत्। महता स्नेहेन पालितायाः पुत्र्या ममतायाः कृते स किं कर्तुं शक्नोति, इत्येव निर्धारयितुं न आसीत् समर्थस्तदानीं चूडामणिः। स पुनर्बहिरगच्छत्। एषा न आसीत् काचिद् अभिनवा घटना। प्रायशः प्रत्यहमेव एवं घटते स्म किन्तु अद्य चूडामणेः मनसि काचिद् अपूर्वेव दुश्चिन्ताऽभवत्। पादौ सम्यक् न पततः स्म।

किञ्चित्कालानन्तरं चूडामणिः पुनः ममतायाः समीपे आगच्छत्। तस्मिन् समये दश सेवकाः तमनुगच्छन्ति स्म। तेषां हस्तेषु राजतस्थालेषु किञ्चिद् अविद्यत। बहूनां जनानां पदध्वनिं श्रुत्वा ममता परावर्त्य अपश्यत्। मन्त्रिमहोदयः सैनिकान् सर्वाणि स्थालानि स्थापयितुं समकेतयत्। सेवकास्तत्रैव स्थालानि संस्थाप्य गता अभूवन्।

ममता अपृच्छत् - 'पितः! किमिदम्?

'त्वत्कृते पुत्रि! इदं त्वत्कृते उपायनं विद्यते'। एतदुक्त्वा चूडामणिः स्थालानाम् आवरणं दूरीकृतवान्। स्वर्णस्य पीताभा तस्यां सन्ध्यायां विकीर्णा भवन्तीव अलक्ष्यत। ममता सहसा अकम्पत- 'एतावान् स्वर्णराशिः! अयं कुतः आनीतः?

'मौनं भजस्व ममते! एतत्सर्वं त्वत्कृते विद्यते'!

'तर्हि भवता म्लेच्छस्य उत्कोच: स्वीकृत: ? हे पित: ! अयम् अनर्थो विद्यते। प्रत्यावर्तयतु एतत्! हे तात! वयं ब्राह्मणा:, एतेन स्वर्णेन किम् अस्माकं प्रयोजनम्'?

अस्य पतनोन्मुखस्य सामन्तवंशस्य अन्त: समीपे वर्तते, पुत्रि! यस्मिन् कस्मिन् दिनेऽपि 'शेरशाह:' रोहिताश्वदुर्गे अधिकारं कर्तुं शक्नोति, तस्मिन् दिने मन्त्रित्वं न भविष्यति, तस्य दुर्दिनस्य कृते पुत्रि!

'हे भगवन्! तस्य दुर्दिनस्य कृते! विपद: कृते एतावद् आयोजनम्,! परमपितु: विरोधे एतावत् साहसम्! पित: ! तस्मिन् दिने भिक्षा न प्राप्स्यते किम्? कश्चन हिन्दू तदा भूपृष्ठे अवशिष्टो न भविष्यति किम्? यो हि ब्राह्मणाय मुष्टिकात्यपरिमितम् अन्नं दद्यात्? असम्भवमिदम्। परावर्तयतु एतत् पित: ?, अहं कम्पे, अस्य स्वर्णराशे: दीप्ति: मम चक्षुषो: अन्धत्वम् उत्पादयति।

'मूर्खाऽसि' – इत्युक्त्वा चूडामणि: बहिरगच्छत्।

अपरस्मिन् दिवसे शिबिकानां पंक्तिम् अन्त: आगच्छन्तीं दृष्ट्वा चूडामणे: हृदये कम्प: समुत्पन्न:। स: धैर्यं धारयितुं नापारयत्। चूडामणि: रोहताश्वदुर्गस्य तोरणे गत्वा शिबिकानाम् आच्छादनपटम् उद्घाटयितुम् अवाञ्छत्। किन्तु पठानसैनिका: अकथयन् –

'अयं महिलाजाते: अपमानो विद्यते'।

उत्तरप्रत्युत्तरक्रमेण वार्ता वृद्धिं प्राप्ता, खड्गा आकृष्टा अभवन्। स ब्राह्मण: मन्त्री चूडामणि: तत्रैव घातित:। राजा राज्ञी राजकोषश्च सर्वे कपटिन: शेरशाहस्य हस्तगता अभूवन् किन्तु ममता तत: निष्क्रान्ता। शिबिकासु निलीना: पठानसैनिका: समग्रेऽपि दुर्गे वितता: किन्तु ममता न तैरधिगता।

काश्या उत्तरस्यां दिशि धर्मचक्रविहार: मौर्यवंशीयानां गुप्तवंशीयानां च सम्राजां कीर्ते: ध्वंसावशेषं स्थलम् आसीत्। भग्नचूडातृणगुल्मैश्च आच्छादितानि प्राचीराणि इष्टिकानां राशिषु विकीर्णा च भारतीयशिल्पकलाया विभूति: ग्रीष्मचन्द्रिकायां स्वात्मानं शीतलीकुर्वन्ति स्म।

यत्र पञ्चवर्गीयभिक्षव: गौतमस्य उपदेशं ग्रहीतुं पुरा मिलिता अभूवन् तस्यैव स्तूपस्य भग्नावशेषस्य मलिनच्छायायां निर्मिते कुटीरे दीपानाम् आलोके उपविष्टा काचित् स्त्री पाठं करोति स्म –

''अनन्याश्चिन्तयन्तो मां ये जना: पर्युपासते -----''

पाठोऽवरुद्धोऽभवत्। काचिद् भयोत्पादिका भीषणा हताशा आकृतिः दीपस्य मन्दप्रकाशे पुरः तिष्ठति स्म। 'स्त्री उदतिष्ठत्, सा कपाटौ पिधातुम् अवाञ्छत् परन्तु स जनः अवदत् – ''मातः! अहम् आश्रयम् इच्छामि''

'कोऽसि त्वम्?'' स्त्री अपृच्छत्।

''अहं मुगलोऽस्मि। चौसायुद्धे शेरशाहाद् विपन्नो भूत्वा रक्षाम् इच्छामि। अस्यां रात्रौ सम्प्रति अग्रे गन्तुम् असमर्थोऽस्मि।''

''कथं शेरशाहात्?'' स्त्री क्रुद्धा अभवत्।

''आम्, मातः!''

''परन्तु त्वमपि तथैव क्रूरोऽसि, सैव भीषणा रक्तपिपासा तदेव च निष्ठुरं प्रतिविम्बं तव मुखेऽपि विद्यते। सैनिक! मम कुटीरे स्थानं नास्ति। गच्छ, कुत्रापि अन्यम् आश्रयं मार्गय।

''कण्ठः शुष्यति, सहसैनिकाः दूरं गताः, श्रान्तोऽश्वः पतितः।''एतावत् श्रान्तोऽस्मि----- एतावत्! एतद् वदन्नेव सः जनः सहसा तत्रैव उपाविशत्। तस्य पुरतः निखिलमपि ब्रह्माण्डं भ्रमति स्म। स्त्री व्यचारयत्, इयं विपत्तिः कुतः समायाता, सा तस्मै जलम् अददात्, मुगलस्य प्राणानां रक्षा जाता। सा स्त्री चिन्तयितुं प्रारेभे – एते सर्वेऽपि क्रूराः दयापात्राणि न सन्ति – मम पितुः घातका आततायिनः! जुगुप्सया तस्याः मनः विरक्तम् अभवत्।

स्वास्थ्यं लब्ध्वा मुगलोऽवदत् – ''मातः! तर्हि गच्छानि अहम्?''

स्त्री विचारयति स्म – अहं ब्राह्मणी, मया तु 'अतिथिदेवो भव' इति स्वधर्मस्य पालनमेव करणीयम्। परन्तु अत्र ----- अस्य सैनिकस्य विषये ----नहि, एते क्रूरा दयापात्राणि न सन्ति। किन्तु नेयं दया ------इदं तु कर्तव्यपालनमस्ति। तर्हि?''

मुगलः स्वखड्गस्य साहाय्यम् आश्रित्य उदतिष्ठत्। ममता अवदत् – ''त्वं छलं न करिष्यसि, अत्र किं प्रमाणम्, तिष्ठ''

'छलम्! नहि, तर्हि आश्रयं न इच्छामि– मातः! गच्छामि, अपि तैमूरवंशीयः कयाचित् स्त्रिया छलं करिष्यति? गच्छामि। सर्वं भाग्यस्य लीला वर्तते।

ममता मनसि व्यचारयत् – ''अत्र किमपि दुर्गं नास्ति! इयं पर्णकुटी एव विद्यते, यः कोऽपि यथेच्छं गृह्णातु, मया तु स्वकर्तव्यपालनं सर्वथा करणीयमेव।'' सा बहिः आगत्य अवदत् – मुगल! प्रविश, अन्तः प्रविश,

भ्रान्त! भीत! पथिक! त्वं कोऽपि भवेः, अहं तुभ्यम् आश्रयं प्रयच्छामि। अहं ब्राह्मणपुत्री अस्मि, सर्वे स्वधर्मं त्यजन्ति चेन्मया किमर्थं तथा करणीयम्? मुगलः मन्दचन्द्रिकायां तन्महिमामण्डितं मुखम् अपश्यत्, स मनसा तां प्राणमत्। ममता पार्श्ववर्तिनीषु भग्नभित्तिकासु गता, श्रान्तः पथिकः अन्तःकुटीरं व्यश्राम्यत। प्रभातकाले भगनावशेषभवनस्य सन्धिच्छिद्रात् ममता अपश्यत् अनेके अश्वारोहिणः तस्मिन् प्रान्ते भ्रमन्ति। सा स्वमौर्ख्यस्य कृते आत्मानं निन्दितवती।

अथ तस्मात् कुटीरात् बहिरागत्य सः पथिकः अवदत् – "मिरजः!! अहम् अत्र वर्ते"।

तस्य शब्दश्रवणमात्रेण आह्लादजन्यचीत्कारध्वनिना स प्रान्तः व्याप्तोऽभवत्। ममता अतीव भीता जाता।

पथिकः अपृच्छत् – "सा स्त्री कुत्र अस्ति? ताम् अन्विष्यतु"। ममता आत्मानं गोपायितुं सचेष्टा अभूत्। सा मृगदावं प्रति गता। सायं आदिनं तत्रैव निलीनाऽस्थात्। सन्ध्यायां यदा सैनिका गन्तुमुद्यता अभवन्, तदा ममता श्रुतवती– अश्वमारोहन् पथिको वदति – "मिरजः! तस्यै नार्यै न अहं किञ्चिदपि दातुमपारयम्। तस्याः गृहनिर्माणमवश्यं कारयतु, यतो हि विपत्तौ अहमत्र विश्रामं कृतवान् अस्मि। मा विस्मार्षीः स्थानमिदम्।"

एतदुक्त्वा ते सर्वे गताः। चौसास्थले मुगलपठानानां मध्ये सञ्जातस्य युद्धस्य अनन्तरं व्यतीतानि बहूनि दिनानि, सम्प्रति ममता सप्ततिवर्षदेशीया वृद्धा अस्ति। एकस्मिन् दिने सा स्वकुटीरे शयाना आसीत्। शीतर्तोः प्रभातकालः। ममताया जीर्णः अस्थिपञ्जरः काशध्वनिना गुञ्जति स्म। तस्याः परिचर्यायां काश्चन ग्रामस्त्रियस्तां मण्डलीकृत्य उपविष्टा आसन्। यतो हि ममता समेषां ग्रामवासिनां सम्पत्तौ विपत्तौ च समभागिनी भवति स्म।

ममता जलं पातुम् ऐच्छत्, काचन शुक्तिकया तां जलम् अपाययत्। सहसैव अश्वारोहः कश्चन कुटीरस्य द्वारे दृष्टिगतोऽभवत्। स स्वेनैव रागेण वक्तुं प्रारभत – "मिरजामहोदयः यच्चित्रं निर्माय दत्तवानस्ति तत् अस्यैव स्थानस्य स्यात्, सा वृद्धा सम्प्रति मृता स्यात्, इदानीं कं पृच्छानि यत् एकस्मिन् दिने शाहंशाहः हुमायूँः कस्याः पल्ल्याश्छयायाम् उपाविशत्। इयं घटनाऽपि सप्तचत्वारिंशतो वर्षेभ्यः पूर्वं घटिताऽभूत्"।

ममता स्वविकलाभ्यां कर्णाभ्यां एतत् श्रुतवती। सा पार्श्वे उपविष्टां स्त्रीम् एकाम् उपादिष्टवती– "तं सैनिकम् आह्वयतु"।

अश्वारोहः ममतायाः सविधे समागतः। ममता त्रुटितस्वरेण अवदत् - "स शाहंशाहः आसीत् साधारणो वा मुगल इति नाहं जानामि किन्तु एकस्मिन् दिने स अस्या एव पल्ल्या अधस्तले न्यवसत्। अहं श्रुतवती यत् सः मम गृहं निर्मातुम् आदिष्टवान् अस्ति। समग्रमपि जीवनम् अहं स्वकुटीरस्य विनाशभीत्या अतिवाहितवती। भगवान् मम प्रार्थनां श्रुतवान्, अद्य अहम् एतत् कुटीरं परित्यज्य गच्छामि। भवान् अत्र भवनं निर्मापयतु प्रासादं वा, अहं तु स्वचिरविश्रामगृहं प्रति गच्छामि।"

स अश्वारोहः स्तब्धः सन् तत्रैव स्थित आसीत्। वृद्धायाः प्राणपक्षी कस्मिन्नप्यनन्ते उड्डीनोऽभवत्।

तत्र एकम् अष्टकोणं मन्दिरं निर्मापितमभूत् तत्र शिलालेखश्च संयोजितोऽभवत् -

"सप्तानामपि देशानां राजा श्रीमान् हुमायूँ एकस्मिन् दिनेऽत्र विश्राममकरोत्। तस्य पुत्रः अकबरः तस्य स्मृतौ आकाशचुम्बिमन्दिरमिदं निरमापयत्"

हा! हन्त! हन्त! तस्मिन् ममतायाः कुत्रापि नाम न आसीत्।

●

---

## Form IV

### अर्वाचीनसंस्कृतम् ( पंजी. सं. ३४५५४/७९ )

१. **प्रकाशनस्थानम्** - नयी दिल्ली ।

२. **प्रकाशनकालावधिः** - त्रैमासिकम् ।

३. **संकेतेन सह मुद्रकस्य, प्रकाशकस्य सम्पादकस्य च नाम नागरिकता च** - डॉ० रमाकान्तशुक्लः, भारतीयः, देववाणी-परिषद्, दिल्ली, ६, वाणी विहारः, नयी दिल्ली-११००५९

४. **पत्राधिकारिणां नाम्ना सह संकेतः** - देववाणी-परिषद्, दिल्ली, ६, वाणी विहारः, नयी दिल्ली।

डा० रमाकान्तशुक्ल इति नामाहं समुद्घोषयामि यदुपरिलिखितं सकलमपि विवरणं मम मतौ सत्यमस्ति।

१५.०४.२०१२ ई.

—रमाकान्तशुक्लः

(प्रकाशकः, सम्पादकः)

# अनामधेयः

उत्कलभाषया मूलरचयित्री - डॉ. प्रतिभा राय
संस्कृतानुवादकर्त्ता - डॉ. भागीरथिनन्दः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-११००१६

प्रभात एव स स्मरणपथेऽनायासमापतति, परन्तु स प्रातःस्मरणीय इति नाहं दृढं वक्तुं शक्नोमि। प्रातःस्मरणीयेष्वन्तर्भवितुं किं पुण्यं, कीदृशं कृतित्वं चाचरितं तेन यदहं तस्य प्रसङ्गेन हास्यास्पदतां यास्यामि। ये प्रत्यहं मन्दिरे गत्वोच्चैः प्रभुनामकीर्तनेनान्येषां भक्तानां ध्यानं भञ्जन्ति, ते सर्वे न धार्मिकाः। तथैव प्रातःकाले स्मृतावुपस्थिता न सर्वे प्रातःस्मरणीया एव।

मदतिरिक्तस्तं कोऽपि प्रातः समये स्मरति वा न वेति नाहं जानामि। किन्तु अन्धकाराल्लब्धावकाशेऽनावृत्यात्मानं, मुखं दर्शयति राजपथे स स्मृतौ ममोपतिष्ठते, न जाने कस्यापि सम्बन्धस्य सूक्ष्मं सूत्रमाधृत्य हृदयस्य प्रत्येकं कोमलं तन्त्रमप्रकाश्यवेदनया च मथ्नातीति। तस्य प्रयाणात् परं प्रत्येकं प्रभातं तत एवारभते। तदवर्तमानतावेदनया मद्गृहस्य राजमार्गः सारयति दिवसेषु चिराचरितां जीवनचर्याम्। अगणितपदाघातान् वक्षसाऽऽदाय मार्गस्तस्य सकरुणस्मृतिमाबध्नाति स्वात्मनि शान्तः।

को वदति यन्मार्गो नालपतीति?

को वा ब्रूयात् मार्गस्यानुभवः कोऽपि नास्तीति?

कोऽप्यन्यो जानातु, न जानातु वा, परन्तु प्रभाते सति मद्गृहसम्मुखमार्गस्तं स्मरति, रोदिति, तद्गुणान् गायति च। किन्तु तन्नाम मुखे न स्पृशति। प्रायेण स न प्रातःस्मरणीय इति तन्नामस्मरणमावश्यकं न भवतीति। अहमपि तं श्रद्धया स्मरामि, परन्त्वस्पृष्ट्वा तदभिधानम्। वस्तुतस्तन्नामाहं न जानामि सत्यपि बहुवर्षेभ्यः परिचये। कोऽपि यदि मां पृच्छति कं स्मरसि? काकध्वानमात्रेण कं चिन्तयसि? इति। तर्हि किमहमुत्तरिष्यामि? केन नाम्ना तं परिचाययामि? कुतोऽधुना तन्नाम ज्ञास्यामि समयाद्दूरं गते तस्मिन्?

मार्गोऽयमतीव निर्विकारो निर्लिप्तश्च। मानवस्य नामपरिचयादिषु स वीतस्पृहः। अतोऽलं ततो जिज्ञासया। अभिधानं हि तस्मिन्निरर्थकः शब्दः कश्चित्। किन्तु मार्गमुभयत आदितोऽन्त्यसीमां यावद् ये वर्षाणि निर्विघ्नं वसन्ति, तेषु कश्चित् किमु तन्नाम वक्तुं शक्नुयात्?

अहं वेद्मि यद् यः प्रभातात् पूर्वं वर्षाणि तन्मार्गं स्वनिपुणहस्ताभ्यां विमलीकरोति, तस्य नाम न कोऽपि जानातीति। समाजस्यास्य समस्तं मलं परिष्कृत्य प्रभातसौरभं प्रत्येकं गृहे प्रसारयितुं पवनायावसरं प्रयच्छति यः, तस्य परिचयं न कोऽपि वेत्ति। अलमन्यान् दूषयित्वा। किमहं निर्दोषा? अहमपि न जानामि तदभिधानम्। परन्त्वहमनुभवामि यत् कस्यापि नाम अविज्ञायापि तं स्मर्तुं शक्यते। एतदर्थमावश्यकी कस्यचिदपि कर्मप्रवणता, तेन सह स्वस्य सम्बन्धगभीरता च। किं ते नामेति जिज्ञास्यमानो वृक्षः प्रायेणोत्तरेत् स्वपरिचयं सहकारः, पनसः, नारिकेलश्चम्पको वेति अर्थात् तत्कृतिरेव तदभिधानमिति। परन्तु तत्कृतिजिज्ञासयोपहसिष्यति जगत्। का तत्कृतिः? तदर्थं स उपलब्धस्वीकृतिर्वा? किमु केन क्वापि वृत्तपत्रे तन्नाम प्रकाशितम्? रेडियोदूरदर्शनादिषु कदापि किं तस्य प्रसारः? मञ्चमण्डपेषु वा क्वचित् कुसुममालया शोभितं तद्वक्षः? मास्त्विदं सर्वम्। न कोऽपि तं कदापि सादरं नमस्कृत्य ससम्मानं पथि सर्तुमवकाशं ददातीति केनापि बत दृष्टम्? परन्तु मार्गमिममुभयतो विद्यमानास्वट्टालिकासु निवसतो महाशयान् स प्रणमतीति मूकं प्रमाणमस्य मार्गोऽयम्। अतस्तस्य कृतिनाम्ना न किमप्यस्ति। तज्जीवनकाले यद्यत्तेन कृतं तत्तत् सर्वं न कृतिवाचकम्। अन्येन सह तस्य सम्बन्धदृढताप्रसङ्गोत्थापनक्षमता मम नास्ति। अतस्तेन सह मम सम्बन्धस्य गभीरताऽन्तरङ्गतादिप्रसङ्गमाधृत्याहमात्मसमीक्षां कर्तुं शक्नुयाम्।

सम्बन्धोऽपि न सरलरेखायामपितु वृत्तरूपमेकं धत्ते, यस्य नैके केन्द्रबिन्दवः। सामान्यतस्तु द्वावेव बिन्दू भवतः। आरब्धः सम्बन्धो नान्तमश्नुते। व्याप्नोत्येष व्यासात् परिधिम्। जन्मजन्मान्तरपरिधिषु परिक्रामति। सम्बन्ध स्त्रुटित इति विज्ञायापि यः सम्बन्धोऽवशिष्यते स प्रगाढो निरन्तरश्च। मित्रे शत्रुत्वमाचरत्यपि सम्बन्धो नैव नश्यति। किन्तु सम्बन्धान्तरं तीव्रतरतां यात्येव।

तेन सह परिचयो मे पञ्चदशवर्षेभ्यः। गृहं निर्मायात्र निवसनात् परमेव। को जानाति प्रयाणसमये किं तस्य वय इति। सोऽपि स्वयं न जानीयात्। अनुमानेनैव सर्वम्। किन्तु प्रत्येमि यत् पञ्चदशवर्षेषु न तस्य कोऽपि क्षयः, न च वृद्धिः। न तेन यौवनाद् वार्धक्यं दृष्टम्। नापि दारिद्र्याद् धनवत्त्वमाप्तम्। वृत्तावपि सत्यामपि दक्षतायामभिज्ञतायाञ्च न स पदोन्नतिं प्राप्तः। स वामनत्वाद् दीर्घत्वं गतो वा न वेति केन बत ध्यात्वेक्षितम्! किं तस्मिन् दर्शनीयमासीद्यत् कश्चित्तं प्रभातादेव ध्यायेत्!

तथापि वितर्दौ समुपविश्य प्रातःकालीनं चायं पिबन्त्या मे दृष्टिः सकृदपि तदुपरि पतति। कण्डोलं सम्मार्जनीं चानादृत्य मार्गाद्धस्तावुत्तोलय्य प्रणमामीति उच्चैः सम्भाषते। अहं साञ्जलिस्तद्वत्तं न प्रतिनमस्करोमीति, तत्सम्भाषणं सादरं गृह्णामि चेति सोऽवगच्छति। एकस्याभ्यन्तरमन्येन दृष्टं भवति कथमिति अन्तर्विदेव जानाति। प्रतीयते – एतावतोभयोः प्रभातं नूनं विकसतीति।

स किमर्थं मां प्रणमति? अहं न तस्य प्रभुः। मम प्रमाणपत्रेण तस्य पदोन्नतिस्तु आस्तां दूरे, वेतनेऽपि पञ्चरूप्यकाण्यप्यधिकानि न लप्स्यन्ते। तस्य प्रणामेनापि न मया कदापि तस्मै पञ्चरूप्यकाण्यप्युपहृतानि। अथच स प्रतिप्रभातं वितर्दिं पश्यति, उच्चैश्च प्रणामं वदन् स्वकार्यं कृत्वा निस्सरति। सम्बन्धोऽयमारब्धस्तेन स्वपक्षतः। मत्पक्षतस्तस्मिन् सम्बन्धेऽग्राह्ये कृते सति अद्य तस्य सम्बन्धस्यासमाप्तपरिधौ स्थितोऽहं तत्स्मृतिं नाचरिष्यम्। अत आवयोः सम्बन्धस्य द्वावेव केन्द्रबिन्दू। सः, अहं च। कतिपयवर्षाणि तेन मे स्वरो नाश्रूयत। केवलं स्वस्वरं श्रावयन्नासीत्। एकदाऽहं वितर्दौ स्थिता तमकारयम्–

"श्रृणु, अभ्यन्तर आयाहि।"

स सम्मार्जनीं त्यक्त्वा तत्परतया द्वारमुद्घाट्याभ्यन्तरे प्रविष्टः। उल्लासो नयनयोः, मुखं च प्रसन्नम्।

अहं साधिकारमिवावदम् – "कुक्कुरो मम प्रतिरात्रं प्राङ्गणे मलं त्यजति। अत्यन्तं निन्द्योऽभ्यासस्तस्य। प्रतिनिशं बहिर्भ्रामितोऽपि दुराग्रहादिवात्रागत्य मलं त्यजति। त्वमवश्यं प्रतिदिनं मार्गमार्जनकाले स्थानमिदमागत्य परिष्कर्तुमर्हसि" – एतावत् श्रृण्वन्नेव स सानन्दमाह "अवश्यं करिष्यामि, प्रतिदिनं परिष्करिष्यामीति।" स स्वाभाविकतयाऽनुचितमपीदं कार्यं स्वीकृतवान्। यथा इतोऽप्यधिकतरोऽनुग्रहः प्रासादवासिनां नाशास्यत इति। यथा स इयन्ति वर्षाण्यस्यानुग्रहस्यापेक्षायामासीदिति। तथापि स किं मत् कामयते? कमप्यधिकं तु पारिश्रमिकं नेच्छति?

दृढतयाऽपृच्छम् –"कियन्नेष्यसि? स्पष्टं वद। पश्चात् पुनः ...."

स जिह्वां दन्ताग्रैर्निरुध्य सविनयं प्राकाशयत् – "यद् भवती दास्यति। भवता सह मूल्यनिश्चयः कुतः?" पुनः प्रणम्य द्वारमुद्घाट्य स गृहान्निस्सृतः।

राज्ञां, भूस्वामिनां च पुरतः किमु प्रजा इतोऽप्यधिकतरं विनयभावम्, आनुगत्यं, विश्वस्तत्वं च प्रदर्शयेयुः? अहं तु न प्रत्येमि। तथापि पञ्चरूप्यकाणि दशरूप्यकाणि वाऽलम्। किं वाऽवदारणीं चालयिष्यति यदितोऽप्यधिकतरं प्रदेयम्! अतिक्षुद्रं प्राङ्गणम्, एक एव कुक्कुरः। सम्मार्जनीभ्रामणमात्रेण कार्यं सम्पत्स्यते।

"अतः पञ्चरूप्यकाण्येवालम्।"

परन्तु मया तत्पारिश्रमिकदानाय दशरूप्यकाण्येव मनसा स्थिरीकृतम्। केवलं पारिश्रमिकमेव न कारणम्, एतावद्भ्यो वर्षेभ्यो यत्तेन सह परिचयः!

दशरूप्यकाणां भारः परवर्तिवर्षेषु गुरुतर एतादृशः स्यादिति को वाऽजानात्? मध्ये मध्ये स कार्यं न करोति, दशरूप्यकाण्यपि न दीयन्ते तस्मै। परन्तु कदापि तस्य 'देवि! प्रणामाः' इति सम्भाषणं न रुध्यते। अतः तेन कार्यं न क्रियते इति नाहमनुभवामि। प्राङ्गणेऽपरिष्कृते "स कार्यमिदं न करिष्यतीति" यदाऽन्ये गृहसदस्यास्तस्य स्पष्टमपाकरणमालोक्याभियुञ्जते तदाऽहं कदापि न विश्वसिमि यत् स एतावतां वर्षाणां परिचयोपरि एवं घनं मलमेकत्रीकरिष्यतीति। अहं सगभीरात्मविश्वासं पृच्छामि-"त्वमिदं न करिष्यसीत्यपाकृतवान्? किं तेऽसौविध्यम्? पञ्चरूप्यकाण्यधिकं दास्यामि यदीच्छसि।"

स साश्चर्यं प्रणमति। वदति - "क्व मे साहस एतादृशः? देवो गृहस्वामी सुरक्षितजलकुण्डं परिष्कर्तुमादिशत्। परन्तु पारिश्रमिकं नासीत् पर्याप्तम्। किमहं करवाणि! मयैकलेन कर्तव्ये सति किञ्चित् क्षत्याऽप्यहमकरिष्यम्। सत्यामावश्यकतायामापतिते चाभावे किं भवती पञ्चाशद् वा शतं वा रूप्यकाणि न दास्यति? परन्तु अन्यैः सह कार्यं तत् कथं वा कुर्याम्? पारिश्रमिकं न श्रमानुरूपमिति अपाकृतमपरैः। स महाशयस्ततः प्राङ्गणं परिष्कर्तुं न्यवारयत्। अन्यथाऽहं केन विवेकेन तदेतत् त्यजेयम्। पारिश्रमिकवृद्ध्यर्थं कदापि किमपि किं मया प्रार्थितम्?"

सत्यं नु! अत्रान्तरे सर्वेषां वेतनवृद्धिर्जाता, रूप्यकस्य मूल्यं ह्रासतां गतम्। क्रेयवस्तूनां मूल्यं वर्धितम्। स्वकुक्षिर्वर्धिता, कुक्षिसङ्ख्यापि। अथच केन विवेकेनाहं तस्मै दशवर्षेभ्यः प्रतिमासं दशरूप्यकाण्येव ददामि! नापि तेन क्वापि पारिश्रमिकवृद्ध्यै प्रस्तावः कृतः। पञ्चदशवर्षेषु तेन पञ्चरूप्यकाण्यपि न प्रार्थितानि।

अनुतप्तस्वरेणावदम् "तान् श्रोतुं नार्हसि। किं तैस्त्वं कर्मणि नियोजितः? तदाऽस्माकं कार्यं न करिष्यसि, यदाऽहं वदिष्यामि। अथवा यदा त्वं स्वयं नैषिष्यसि।"

निशम्यैतदनुतापत्रुटित इव पुनः प्रणम्याह "क्षम्यताम्। नैतादृशी त्रुटिः पुनर्भविष्यति। महोदयास्ते यदा प्रभुत्वेनादिशन् 'द्वारस्यास्याभ्यन्तरे न प्रवेक्ष्यसि' इति, ततः परं कथमहं साहसं कुर्याम्? इदानीं ज्ञातवान्। न गणयिष्यामि तेषां वचनम्।"

परन्तु वारं वारं पुनरावृत्तिर्भवत्यस्याः प्रक्रियायाः। पुनः मयि ज्ञातवत्यां विद्योतते ममोद्यानम्, निर्मलीभवति च मे प्राङ्गणम्। नालिका प्रस्फुरति तन्मलिनहस्तस्य विमलस्पर्शेण। कतिवारं स कार्यं त्यजति, तञ्चाहं पुनरावाहयामीति गणनैव नास्ति। अत्रान्तरे ममायुर्वर्धितम्। ममोद्यानस्य लघुपादपा गगने करान् प्रसार्य रविं स्प्रष्टुमास्पर्धन्त इव। ममापत्यान्यपि दीर्घतां चुम्बन्ति। मम घनलम्बितकेशाया, अनुनासिकक्रन्दनाया, अत्यादरकामिन्यास्त्रासाकुलायाश्च कन्याया विवाहः। चरणौ मे न स्थिरौ क्वापि। श्वो मङ्गलपाकः। असमाप्तं निमन्त्रणपत्रवितरणमद्यापि।

परिचयस्तु न स्वल्पः। प्रत्येकस्य पृथक् पृथक्। पितुः, पुत्रस्य, कन्यायाः, बन्धूनां च परिचयसूचीं प्रस्तूयापि द्विवारं निमन्त्रणपत्राणि मुद्राप्य वितीर्णानि। तथापि परिचिताः केचनावशिष्टाः। कतिपयेषां मौखिकनिमन्त्रणेनापि कार्यनिर्वाहः। प्रातःकाल एव गृहस्य सर्वे निमन्त्रणपत्राणि आदाय निर्गच्छन्ति। अहमपि तदा कानिचिद् धृत्वा निस्सरामि – सोऽपि प्रतिदिनमिव मार्गं परिष्करोति। मां विलोक्य प्रणमामीति प्रकाशयति तस्मिन् त्वरयाऽहं याने उपविष्टा। मत्पुरत आगत्य साधिकारमिवाभाषत – "अहमपि भगिन्या विवाहोत्सवे भोजनाय सपरिवारमायास्यामीति।" इयं तस्यानुमतिभिक्षा नासीदपितु सप्रेमघोषणैव। अहं तु क्षणाय चकिता। एतावतां वर्षाणां परिचयः, अथ चाद्यापि मया स न निमन्त्रितः. कुतः? अप्रकाशयति तस्मिन् तस्य निमन्त्रणमहमकरिष्यम् न वा?

अहं स्वयं स्थिरीभूयावदम् – "किं त्वं नागमिष्यः? अहं न निमन्त्रयिष्यामीति किं चिन्तितं त्वया? निमन्त्रयिष्यामि वा कुतः? तव तु गृहमिव।" सोऽतिप्रसन्नतां गतः। कन्याविवाहव्यस्ततायां 'क आयातः, को नायातः' इति स्मर्तुमसम्भवि। किन्तु, न जाने, महति सम्मर्देऽपि तत्प्रसङ्गो मे मनसि मुहुर्मुहुर्गुञ्जति स्म। स वस्तुत आयास्यति न वा? बृहत्यस्मिन् सम्मर्दे सपरिवारं प्रवेष्टुं सङ्कुचेत्। प्रतिवेशिषु को वा न जानाति तम्!

परन्तु स स्वाभाविकतया समागतः। तेन सह तस्य युवती पत्नी, तिस्रः कन्याश्च। सर्वे ते परिष्कृताः, स्वरुच्यनुसारेण सुन्दरवसनपरिहिताश्च। सम्मर्देऽस्मिन् प्रकाशमयाडम्बरपूर्णपरिवेशे स्वाभाविकशैल्या निस्सङ्कोचं सविनयं मां प्राणमत्, तस्य पत्नी च। मम पुत्र्या निकटे समागत्य प्राणमन् चित्रग्रहणालोकप्राचुर्ये। तत्सख्यस्तान् चकिता अपश्यन्। तस्य पत्नी उपाहरत् मम कन्याया हस्ते उपहारकर्गलबद्धं चित्रं पुटकमेकम्। अतिभारवत्तत्। किं वोपहृतं स्यात्तेन! को बत तमुपादिशत् पुटकेन सह समागन्तुम्! आकण्ठं भोजनं स्वीकृत्य गच्छेयुस्ते कन्यायै कल्याणं प्रदाय। किं तदाशीर्वादो न फलिष्यति! तद्देहे उपवीतं तु नास्ति। प्रायेण तत एव किमपि क्रीत्वाऽऽनीतम्। कथं वा नानयतु! कि तस्यात्मसम्मानो नास्ति? स तु भोजनपत्राणि एकत्रीकर्तुं नायातः, उपस्थितस्तु अतिथिरूपेण। अभ्यागतस्य परिचयोऽभ्यागतत्वमेव। तत्रायं कुलीनः, अयमकुलीनः; एष धनवान्, असौ दरिद्रश्चेति गणना लघुचेतसाम्। उदारताप्रदर्शनप्रयत्ने जनानां तारतम्यमपि स्पष्टं प्रतीयते। तेनाप्यातृप्ति भोजनं गृहीतं स्यात्। एतावत्सु जनेषु युगपद् ध्यानमसम्भवि। तद्भोजननिकटे मुहूर्तायोपस्थित्या लप्स्यमान आत्मसन्तोषो मयाऽऽडम्बरतीव्रतायां हस्तान्तरीकृत एव।

कन्यानिर्गमनात् परेद्युर्मार्गादेव प्रणम्य प्राकाशयत् "भोजनान्यत्यन्तं स्वादिष्टान्यासन्, आकण्ठं गृहीतमस्माभिः सर्वैः।" अहं प्रमुदिता।

विवाहसम्मर्दे कतिचनोपहारपुटकानि गृहीतानि नालभ्यन्त। तत्प्रदत्तं पुटकमपि। विशेषभारवदिति केनापि लोभेनापहृतं महार्घं वस्तु मत्वा।

तत्प्रदत्तं तत् किं भवेत्? एतावान् भारः, मत्कन्याऽवदत् "एतादृशो भारो यदहं तदेकेन हस्तेन धारयितुं न शक्ता। प्रायेण काऽपि मूर्त्तिः स्यात्। तथैव प्रतीयते स्म धारणे।" कोऽपि परिहसन्निवाह – "मृन्मयी मूर्तिरिव स्यात्। अन्यथा ततः किं सम्भवेत्! नूनं मृत्पुत्तलिका .......मार्जारमुखे बद्धो मीनः ...........।"

सर्वे व्यहसन्। वस्तुतस्तस्योपहारस्य भारः सर्वतोऽधिकः। उपहारस्तु कस्यापि न दृश्यते, अतस्तेषां मत्या मृत्पुत्तलिका।

नीलमर्धोरुकम्, चित्रमर्धयूतकम्। शिरसि रक्ता गात्रप्रोञ्छनी। निर्मायमुखे विश्वस्ततायाः सश्रद्धं चिह्नम्। हस्ते आवर्जनापरिष्करणाय सम्मार्जनी। उच्चता मध्यमा, स्वास्थ्यं च मध्यमम्। स्वल्पेनैव सन्तोषं परिस्फुरयदकृत्रिमं वपुः। स्ववृत्तिं जातिं चानिन्दन्, सुखेन निवसतो मनुष्यान्

प्रति निष्कारणमनसूयन्, निजभाग्यं भगवन्तं मन्वानश्च निर्व्याजो मनुष्यः। अद्य तं स्मृत्वा सैतादृशी तस्य च्छविर्मनसि मे आकारं धत्ते।

कन्याविवाहचित्रेषु तत्प्रणामदर्शकं चित्रमस्ति न वा! तस्मिन् दिने पृथगासीत्तत्परिच्छदं, परन्तु तद्वपुर्मुखमनोव्यवहारादयस्त एव। न तेषु कृत्रिमतालेशः।

पूजनकार्यक्रमात् परं कन्यागृहात् प्रत्यावर्तितायाः, अलिन्दे प्रातश्चायं तस्मिन् दिने पिबन्त्या मे 'सादरं प्रणामाः' इत्युष्णसम्भाषणं कर्णयोर्गोचरतां गतम्। अहं स्वपतिमपृच्छम्- "गतनवरात्रपुरस्कारस्तस्मै दत्तो न वा? अहं तु उपस्थिता नासम्।"

"न, नैव दत्तः। अद्यत्वे आदेशं न शृणोति, प्राङ्गणमपि प्रत्यहं नैव परिष्करोति। तत्कार्यं मया रुद्धमेतस्मादेव कारणात्।" पतिरुवाच।

अहं क्षुण्णा। असन्तोषं प्रकाशयाब्रवम् - "किमर्थं दीनमेनं पीडयति? केनाप्यसौविध्येन कार्यं कृतमेव न स्यात्। नैके समाजे प्रतार्य हरन्ति। प्रतिमासं पञ्चदशरूप्यकाणि, नवरात्रे च पुरस्काररूपेण दशरूप्यकाणि। एतन्मात्रेण किमस्माकं सर्वं क्षीयते! तस्मै तस्य पुरस्कारं ददातु। कार्यं न तेन रुद्धम्। न तं पुनरपाकर्तुमर्हति भवान्। सज्जनः खलु सः।"

शैशवसुलभया सरलतया पतिरुवाच "मया किमु तस्य कार्यं रोधितम्? अकार्यमेतत्तदतिरिक्तः कः करोतु? अहं ज्ञातवान् यत्त्वय्यागतायां तस्मै पुरस्कारो लप्स्यते। रोषेण स मयाऽपाकृतः। अस्तु, इतः परं तथा न भविष्यति।''

तदा तस्मै पुरस्कारं वेतनं च प्रदाय पतिस्तमादिशत् "मदाज्ञया कदापि कार्यं न त्यक्ष्यसीति असकृदुपदिष्टस्त्वम्। तथापि त्वं प्रतिज्ञयेव त्यजसि। अद्यारभ्य मया तर्जितोऽपि कार्यं न त्यक्ष्यसि। सावधानो भव। एतेषु वर्षेषु किमु न त्वया ज्ञातं यत् कोऽस्माकं गृहपतिरिति?" स सस्मितं प्राणमत्। सुखं यत् तस्मिन् दिने मम पत्या सह तस्य स्थायी वार्ताविनिमयो जात इति।

परेद्युः स कार्यार्थं नायातः। मध्याह्नं यावद् राजमार्गः आवर्जनामलिनोऽनाथ इवादृश्यत। अस्माकं प्राङ्गणमपि अपरिष्कृतम्। पतिर्मे सरोषमाह "सर्वैः पञ्चविंशतिरूप्यकैर्मद्यमास्वाद्य सुषुप्त एव स्यात्। एतादृशां व्यवहार एवम्। मातुस्तेषामस्याः सर्वान् प्रति दया मामेनमधममतिरिच्य।"

अहमपि तदानीमीषद्रुष्टा तं प्रति। गतदिने धनं नीत्वाऽद्य नायातः। श्व आगच्छतु, तं प्रक्ष्यामि। परन्तु किं पञ्चदशरूप्यकैर्मया तस्यात्मा

क्रीतः? स स्वेच्छया जीवितुं न शक्तः। परन्तु मरिष्यति नु! अन्यथैतादृशाः धनमाप्य मदिरापानेन स्वस्वस्वास्थ्यं, शान्तिं च नाशयेयुः कुतः?

सूपकारो विपणेर्वस्तुन्यादाय प्रत्यावर्तितः। व्ययपत्रमर्पयन् स्वाभाविकरीत्याऽऽह – "स ह्यो मृतः।"

"मृतः? कः ?" – अहं चकिताऽपृच्छम्।

पाचकोऽवदत् – "सम्मार्जको मृतो योऽस्माकं प्राङ्गणं परिष्करोति स्म।"

"अहह कथं मृतः? किं जातं तस्य?"

"ह्यः कर्मणः निवृत्तोऽन्नपाकाय विद्युच्चुल्लीं योजयति स्म। विद्युत्स्पर्शो जातः। तत्रैव पतित्वा मृतः। तत्पत्नी स्वव्यापारात् परावृत्यापश्यद्यत् पतिः पञ्चत्वं गत इति।"

"मदिरा तेन पीतैव स्यात् – ततोऽज्ञानेन विद्युत्स्पृष्टः स्यात् – अन्यथा स्पर्शः कथं सम्भवेत्?"

पाचकः समाचारमेनं निर्विकारशैल्या समुपस्थाप्य स्वकर्मणि निर्गतः। "स किमर्थमन्नं पचति स्म? अन्नभोजनं हि तस्य कर्म। पत्नी बहिः कार्यं करोतीति न पक्ष्यति – इदं कुत्र निर्दिष्टम्?" अहं तस्य पत्नीमभिशपन्ती एतावदुक्तवती। सूपकार उवाच – "मातः! तस्य पत्नी सम्मार्जनकार्यमपि करोति। विलम्बेन प्रत्यावर्तते। अतः पूर्वमसौ अन्नं पचति .......एवं विपणौ जना आलपन्ति स्म। मदिराऽऽकण्ठं पीता स्यात्। प्रकृतिस्थोऽपि न स्यात्। विद्युत्स्पर्शेण मृतः। अन्यथा प्रतिदिनं तु तथैवान्नं पचति। अद्य पुनरेवं कथम् – " जुगुप्सया सूपकारोऽवादीत्।

पतिर्मे संवेदनयाभाषत – "दिष्ट्या ह्य एव मया तस्मै धनं प्रदत्तम्। अन्यथाऽनुचितमेव स्यात्।" तेन, महान् धर्म आचरितो महोदयेनेति मतमासीत् पाचकस्य। अहं चिन्तयामि स्म यद् यदि तस्य मृत्युस्तद्ध नाहृतेन मद्येन, तर्हि ह्योऽदत्त्वाऽद्य तद्दानेन क्वचिज्जीवितो भवेत्। अतः प्रकारान्तरेण किमहं तस्य मृत्युकारणम्?

स किं वस्तुतो मदिरापानेन विद्युत्स्पर्शाघातेन मृतः? वस्तुतस्तेन किं भङ्गुरा मृत्पुत्तलिकोपहृता? तद्विषये को जानाति तथ्यम्?

अनामधेयोऽसौ जनः किल। अतस्तस्योपहारो मृत्पुत्तलिकैव स्यात्। मदिरापानान्मृत एव स्यात्। अतस्तस्मिन् दिवं गते शोकसभा नायोजिता। न पिहिता विपणिमाला। स्वयं मार्गोऽपि निमेषमात्रायापि शोकं नाचरत्। प्रभातात्

पूर्वमपि मार्गवक्षसि पदाघातेन प्रतिदिनमिवोपस्थितः सम्मर्दः क्षणायापि मौनं न व्यज्ञापयत्।

परेद्युरतिप्रभातात्कस्यापि मार्गे सम्मार्जनशब्दोऽश्रूयत। तद्वदेव शब्दं विकिरन् सम्मार्जनीं सारयति कः? अहं शय्यां सन्त्यज्योच्चस्वरेणापृच्छम् - "कः मार्गं परिष्करोति?"

'सम्मार्जकः' इत्युदतरत् गृहपाचकः।

"सम्मार्जकः! किमु तन्मृत्युस्तर्हि असत्यवृत्तम्? हे भगवन्, तस्य रिष्टखण्डनमभवत्तर्हि।"

"नैव मातः! एषोऽपरस्तत्स्थाने।" - पाचकोऽवदत्। अहं पूर्णतो हतोत्साहा जाता।

अवश्यमेते सर्वे सम्मार्जकाः। एकस्मिन् मृते सत्यपरस्तत्स्थानं पूरयति। अतः सम्मार्जकस्य मृत्युना कस्याप्यपूरणीया क्षतिर्जातेति वक्तुमहं न शक्नोमि। बहुवर्षेभ्यः परं स स्मृतावायाति। एकदाऽकस्माच्चिन्तितवती तत्स्थाने कार्यं कुर्वतो जनस्य किं नामेति। अहं न जानामि। न जानाति कोऽपि प्रतिवेशिष्वपि।

अङ्गुष्ठचिह्नप्रमाणेन प्रतिमासं वेतनं ते स्वीकुर्वन्ति। सम्मार्जक इत्यावाहनेन न केवलम् 'ओम्' इति वदन्ति, अपितु सविनयं प्रणमन्ति, विश्वस्तसेवामपि कुर्वन्ति।

अतिमहत्त्वपूर्णकार्यव्यस्ततायामेतादृशामनामधेयानां नामानि विज्ञाय को वा लाभः?

●

# प्रार्थना

-शशिपाल शर्मा 'बालमित्रम्'
एद६१/ए जीवन पार्क, उत्तमनगर, नई दिल्ली- ११००५९

भारति! नय माम् असतः सत्यं
मरणाद् दूरे माम् अमरत्वम्।
तमसो दूरे माम् आलोकम्
सानन्दं कुरु हर मे शोकम्।।
वरदा सदा शारदा माता
हंसवाहिनी वीणापाणिः।
भवतु बोधदा ज्ञानप्रदा नः
मनः शिवं नो मधुरा वाणी।।

●

---

# भूकम्पो नानुभूतः

- डा. अजयकुमारमिश्रः
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली-११००५८
चलदूरभाषः ०९९६८३०३२४३

श्रुतं ह्यः भूकम्पस्य विषये
किन्तु लेशमात्रमपि न अनुभूतं मया
किमर्थम्
जीवने तु बहुवारं इदृशी आपदा दृष्टा।
बाल्यकाले मम गृहस्य समीपे
'रहीम चाचु' इत्यस्य गृहमपि आसीत्।
एकदा रात्रौ
तेन सह कस्यचित् मुष्टामुष्टी अपि जाता।
प्रातः श्रुतम्
तस्य अजः रामसेवकस्य पुष्पपादपम् भक्षितवान्
परेद्युः वटवृक्षस्य नीचैः पञ्चपरमेश्वरस्य निर्णये
"रहीमकाका" इत्यस्य दोषः सिद्धः।
पशुकारणात् पशुवत् उभयोः मध्ये केवलं कलह एव जातः,

मासान्ते श्रुतम्
तत्र रक्तहिंसा
अपि जाता।
सोऽयम् अजः तु अधुनाऽपि
तस्मिन्नेव उद्याने भ्रमति क्रीडति च
किन्तु काकारहीमस्य अनुजः
मम शैशवाभिभावकः ( लोकशब्देषु-गृहपरिचारकः ) रामसुहावनः -
यस्य स्कंधमारुह्य
स्वरुदनसमये क्रीडां कुर्वन्नासम्
सोऽपि अस्मिन्
सम्प्रदायिकज्वालाग्नौ
भस्मीभूतः।
भूकम्पस्यास्य अनन्तरं
कोऽपि न परस्परं मिलति
न कापि चर्चा भवति।
किन्तु कर्णाकर्णिया बहु कुचर्चा श्रूयते।
परन्तु,
नरसंहारस्य स्मरणं कृत्वा चित्तं विदीर्यते।
अस्य पाषाणमनुजरूपभूकम्पापेक्षया
पार्थिवो भूकम्पः मह्यं रोचते
यस्यान्ते
पुनः नवसृष्टिः निष्कलुषा च रचना भवति
सर्वे रागद्वेषाः धरायां धूसरीभूयन्ते
परन्तु
कतिदिनपर्यन्तम्
अस्माकं माता
वसुन्धरा
विकलांगसंवेदना-भ्रूणहत्या-यौतुकप्रथा
आतंकवादटिहरीबाँधनिर्माणयोजना-सदृशीः
हृदयविदारका दुर्घटनाः द्रक्ष्यति!

●

प्रो. ए. वी. शंकर-प्रणीतम्

# 'गुरुवायुपुरेशमाहात्म्यम्'

-देवनागरीलिप्यन्तरणकर्त्री
श्रीमती वी. वी. प्रेमलता

प्रबन्धः

आस्तम्बादाविरिञ्चम् फलमनुभवति स्वस्वकर्मानुरूपम्
सर्वोऽपि प्राणिवर्गो भरत! कुरुकुलक्षेमसौभाग्यसिन्धो!
अश्रेयः कर्मणोऽस्मादहिवनहवनाद्वारयात्मानमेवम्
देवाचार्योपदेशात् सपदि गतरुषः सत्रतोऽसौ व्यरंसीत्॥१॥

प्रबन्धः

सर्पदंशो महारोगो दारिद्र्यं वज्रपातनम्।
अग्निबाधा च शस्त्राणि करस्थानि हि कर्मणः॥२॥

गद्यम् ॥१॥

विरतोऽपि सत्राद् गोत्राजानिः अनपराधबहुसहस्रपवनाशन-विनाशनापराधसमेधितदुष्कर्मफलरूपदुस्सहदुश्चर्मदूषितघनापघनसुषमः विच्छायितगोत्रमहिमा, पुत्रनिवेशितप्रजापरित्राणभारभूमा, मुद्रादरिद्र-पीडापनीतनिद्रः, सुभद्रगुणमाद्रवतीतनयो जनमेजयः कृष्णसख इव कुचेलः, तार्किक इव निरये निरयतां निरूपयन्, दुर्वासर इव निष्प्रकाशः, निःस्व इव निस्सुखः, अविचिकित्सया चिकित्सयाप्य-दृष्टप्रतिविधानः, चन्द्रकुलोद्भूतित्वादिव सूर्यकृपापात्रतामप्राप्तः सूर्यालोकादपि जुगुप्समानः, प्रजापतिरिव रसनानियन्त्रितभारतीविलासः, पतिव्रतारत्नमिव परपुरुषदर्शननिवर्तितनिजांगयष्टिः, नियतिविरचित-लिपिम् शिरसीवान्यप्रतीकेष्वपि मृगयन्निव नखशिखान्तकण्डूयनव्यापृत-करद्वयरुहः, प्रतपस्वीवाभ्यवहारव्यावृत्तचित्तवृत्तिः, अग्नेरुदित-मुदकमिति लोकाय कथयन्निव उल्लाघतामनोरथाय निवापसलिलं कल्पयन्निव च सान्तापिनसमाक्रान्तस्वान्ततयाऽजस्रमस्रधाराम् विमुञ्चन्,

सुवर्णोऽपि प्रापितो दुर्वर्णताम्, हुताशनहुतमृतसरीसृपनिवहैरुररीकृत-विप्रतीसाररूपैर्मुहुर्मुहुर्दन्द्रश्यमान इवेतिकर्तव्यमजानानः, समवर्तिनमेव शरणमिति मन्वानः, वासरायितनिमेषः, मासायितवासरः वत्सरायितमासः, युगायितवत्सरश्च जीवितयात्राम् कथंकथमपि निर्वर्तयामास।

प्रबन्धः

अत्रान्तरे भूपतिरत्नहर्म्यमात्रेयनामा मुनिसार्वभौमः।

पुरस्सरो वैष्णवभक्तिभाजामुपेयिवान् विश्वजनीनकर्मा॥३॥

प्रबन्धः

लोकानुग्रहनिग्रहक्षमतया हौताशनं बिभ्रतम्

तेजस्तं मुनिपुंगवं स्वसुकृतम् सांगं समभ्यागतम्।

वीक्ष्योत्थाय निजासनादुपगतो बध्वाऽञ्जलिं मूर्धनि

प्रावाणीदतिमात्रवान्तकरुणाम् वाणीं कुरूणां पतिः॥४॥

प्रबन्धः

ब्रह्मन्नुग्रतपःप्रभावित! नवस्वर्गस्य सर्गात् बहु-

ब्रह्मन्नश्रममेव संश्रितजनश्रेयोविधानप्रभो!

संख्यातीतसरीसृपक्षणनतो जातेन घोरांहसाम्

जातेनाद्य समग्रतः कवलितस्वास्थ्यं नये जीवितम्॥५॥

प्रबन्धः

कठोरेण कुठारेण कोठरूपभृताऽन्वहम्।

कषणीक्रियमाणत्वाज्जीवन्नपि मृतोऽस्म्यहम्॥६॥

प्रबन्धः

केनामृतेन पुनरप्यमृतो भवेयम्

को मां निपाययति तत् करुणापयोधिः।

इत्येव नित्यमनुचिन्तयतो ममाद्य

प्रादुर्गतोऽसि भगवन् भवतापहारिन्!॥७॥

प्रबन्धः

धृत्वा मुक्त्वा च मार्त्यं वपुरवनितले धर्मसंरक्षणार्थम्
नाकं प्राप्य स्थिता मेऽविकलसुखजुषः पूर्विका धर्मजाद्याः।
पौत्रं मां कल्कभारावनमितवदनम् वीक्ष्य कालेयकाल-
क्षेपार्हं बाष्पधाराकलुषितनयना जोषमास्ते सभायाम्।।८।।

प्रबन्धः

कुरुवंशजमेनं मां कुरुं त्वयि महात्मनि।
कुरु वृजिनतो मुक्तम् गुरुस्त्वमसि शाधि माम्।।९।।

गद्यम् ।।२।।

एवमपवित्रश्वित्रविध्वस्तगात्रशोभस्य सगिन्धानसन्तापदन्दह्य-मानमानसस्य भग्नमानस्य दैन्यह्रदनिमग्नस्य जनमेजयस्य अनितरजन-नाथस्य हृदयमाथनं नाथनवचनमाकर्ण्य मुनिरात्रेयः पत्रिवर इव आनन्दितविनताशयः शयमुन्नम्य कृताशीः विधेयं विनिश्चित्य विपश्चितामपश्चिमः सारवतीं सरस्वतीमुदीरयामास।

प्रबन्धः

राजन्! सौभद्रपौत्र! प्रमथितविमतव्रातदोर्वीर्यदर्प-
प्राप्तप्रस्ताव्यकीर्तिप्रगुणित कुरुसौभाग्यसम्पत्तिराशे!
भद्रं ते बोभवीतु प्रविततहरिकारुण्यशान्तव्यथस्य
क्षेत्रं याह्यंग साक्षाद् गुरुपवनपुरे स्थास्नु रोगोपशान्त्यै।।१०।।

प्रबन्धः

यत्रास्ते हन्त भाग्यं धरणितलजुषां मानुषाणां समेषां
पुण्यश्रीविग्रहात्मा शमलपटलिकातूलवातूलतेजाः।
मुक्तिं भुक्तिं च दित्सन् निजपदयुगलीसक्तलोकाय नित्यम्
प्रत्यग्रांभोदकान्तिप्रचुरिमकमनीयांगसंस्थो मुकुन्दः।।११।।

गद्यम् ॥३॥

यो वा किल कुरुनन्दन! प्रथमानप्रभूतमानभाजां प्रथम! जनमेजय! हयग्रीवापहृतप्रथमवैखरीप्रथिमपृथुलवैभवाम्नायसमाम्नाय- प्रत्याहरण-विधृतसारतरविसाराकृतिः, दुर्वारवीर्यदुर्वासःशापदुर्मनायमान-दैवतजननिर्वर्त्तितपयःपयोधिनिर्मथनमज्जन्मन्थरदण्डमन्दरधसमुद्धरण-समादृतसुदृढकमठपरिवृढकायः, अपायजलधिपतितधरणिगोलसमुच्छ्र-यणसमसमयसमापतितदुर्विषहरोषहिरण्यरेतोदुष्प्रेक्ष- हिरण्याक्षरूक्षतर-वक्षोविदारणविहरणविरचितवाराहदेहः, निजचरणैकशरणसुजनप्रवर-प्रह्लादनाचारप्रह्लादकुमारप्रस्तुतनिस्तन्द्रविद्रोहनिष्ठुरतरहिरण्यकशिपुनि-ग्रहणपरिगृहीतगरिष्ठरोषरक्तनयनघनिष्ठखरनखरसकलभुवन-भीषणमानुषमृगदृष्टिवेषः, कायाधवकुलजातमाहाजनिकचरितमहाबल-महोविभवमहाबलिदानवदानशीलतागर्वनिर्वापणधूर्वहपरिमितपादत्रयप्रमित-लोकत्रितयवामनगात्रः, दुरारूढदीप्रतरदुष्प्रतापसमुद्धतबाहुजवर्ग-प्रवर्धमानदुर्भरसर्वंसहाभारप्रमोषणविज्ञानप्रयोगभृतशतधारनिशितधारघनपरशुघोर-भृगुतिलकः, शंकरगिरिकम्पनरससंभृतमददशवदनवंशवनदहनपटु-शिखायितकटुविशिखकूटविपाटितसज्जनदुरितसञ्चयरघूद्वहतनुः, पूतनाशकटतृणावर्तबकधेनुकप्रलम्बचाणूरकंसशिशुपालनरककाल-यवनकेशिमुरपौण्ड्रकप्रभृतिमनुजरूपदितिजवृन्दसंक्षपणसंस्थापित-धर्मलब्धप्रतिष्ठरामकृष्णाकलेवरः, पदे पदे तत्तदवस्थासु पुरुतर-कारुण्यकृतावतारपरिपाल्यमानजगतीमण्डलः यत्र समस्तजन-सेवनीयतामितो नयनसाफल्यदायी राजतेतराम्।

प्रबन्धः

निखिलभुवनसर्गक्षेमनाशैकसाक्षी
मनुजदनुजलेखस्तूयमानापदानः।
कथमिति कथयस्व श्रीपतिः केवलात्मा
गुरुपवनपुरेशप्रख्यया प्रस्तुतोऽभूत्॥१२॥

प्रबन्धः

कुरुनन्दनवचनमिदम् मुनिरात्रेयो निशम्य निजगाद।
भूयः कण्टकितांगो हरिचरणसंस्मरणनिभृततरलात्मा॥१३॥

गद्यम् ।।४।।

पुरा किल सुतपाः प्रजापतिः दयितया पृश्न्या सहितः सुकृतबहुतपाः सुप्रसन्नात् प्रजापतेरविन्दत क्षणप्रभाव्यूहमिव घनप्रकाशावहं महामेरुमिव कल्याणनिलयनम्, बन्धविशेषमिव सर्वतोभद्रम्, प्रबन्धविशेषमिव रसात्मकम्, वैधात्रं कलत्रमिव निखिलविबुधलोकाभिवन्दितम्, पूषाणमिव दोषान्तकरं पद्माक्षम्, वसन्तसमयमिव गन्धर्वगणमिव कलकण्ठोल्लसितम्, अपांनिधानमिव सुशोभनक्रमकरम् मुक्ताधिवासस्थानम्, सौन्दर्योत्तरतोऽपि सुन्दरतरम् अंभःप्रदसप्रभम् वैष्णवमुदग्रतरवैभवम् विग्रहम्।

प्रबन्धः

मूर्तिं विश्वम्भरस्य प्रणतजनकृपावर्षिणा पद्मजेन
प्रत्तां तां दम्पती तौ स्थिरतरमनसा पूजयित्वा प्रकामम्।
प्रत्यक्षीकृत्य देवं सरसिरुहगदाचक्रशंखाभिरामम्
पुत्राय प्रार्थयेतां सकलशुभगुणोदारकेदारकाय।।१४।।

प्रबन्धः

कठिनतरतपोभिः प्रीणितोऽहं युवाभ्या-
मजनिरपि जनिष्याम्यात्मजत्वेन नूनम्।
त्रिषु जनिषु पितृत्वेनानुगृह्णामि वां किं
भुवि तु पुनरसाध्यं भक्तिभाजां जनानाम्।।१५।।

प्रबन्धः

पृश्निगर्भम् प्रविश्याथ पुत्रत्वेन तयोर्हरिः।
जातः प्रपेदे प्रख्यातिं पृश्निगर्भ इति प्रभुः।।१६।।

प्रबन्धः

सुतपाः सुतपाः पश्चात् कश्यपनामा प्रजापतिर्जज्ञे।
पृश्निश्चादितिनाम्नी तनयतया वामनः परंपुरुषः।।१७।।

प्रबन्धः

कान्तां तामेव मूर्तिं प्रणयमधुरया पूजयित्वाऽतिभक्त्या
विष्णोः कारुण्यभूम्ना फलमतिसुभगम् वामनत्वेन चाप्तम्।
चित्रं चित्रं प्रवृद्धं जगदिदमवधीकृत्य यत्पादतीर्थम्
गंगा लोकान् पुनाना प्रवहति वहते यां च मूर्ध्ना महेशः॥१८॥

गद्यम् ॥६॥

निर्मलब्रह्मणः पुराणपुरुषस्य पुरुषोत्तमस्य, भूभारहरणार्थं पुनरवतरिष्यतः सोतृभावेन परिगृहीतोऽयम् अनुगृहीतो निर्जरमहिमेति निर्जनजनैरुच्चकैः ताड्यमानेषु वाद्येषु आनकदुन्दुभ्यादिषु यदोर्वंशे वसुदेवात्मना धृतात्मनि कृतात्मनि कश्यपे, अदित्यां च देवकतनयात्वेन कृतावतरणायां, भगवानपि विश्वात्मा हरिः तयोरष्टमः कुमारः प्रथमं भक्तकुलहृदयमिव नीतो गोकुलमनाकुलं, प्रीतः कृष्णाख्यया सबलो निरपायनिर्वाहितकौमारः ततः पुत्रवियोगविधुरपितृजनाध्युषितां मथुरां प्राप्य स्वयमेकपयोधिशायित्वात् अपरपयोधिमध्यनिर्मितायां द्वारवत्यां उद्धवसात्यकिप्रभृतिभिः अनुत्तमभक्तिसौहृदधनैः उपसेव्यमानः, स्मृतार्थाय पार्थाय कुरुक्षेत्ररणक्षेत्रमध्ये सामयिकं पथ्यं सारथ्यं वहन् पुनस्तस्मै विस्मृतार्थाय शर्मणे कर्मयोगमादिशन्, सुरसार्थपोषकोऽपि नरसार्थपोषकः तमोदावहननिपुणोऽपि नतमोदावहनचुञ्चुतां प्रपञ्चयन्, मत्स्य इव जलाशयाश्रितः, कूर्म इव अनन्ताभरणम्, वराह इव भूदारः, नरसिंह इव हिरण्यदाता, वामन इव असमविक्रमः, भृगुरामः इव शिवप्रियः, रघुराम इव वरलक्ष्मणोपेतः, बलराम इव रोहिणीजातः प्रकटितसमस्तावतारगौरवः महीतलं चिरायुरलंचकार।

प्रबन्धः

धौम्यादाप्तां स्वमूर्तिं सरसिजजनुषा पूर्वमभ्यर्चितां तां
जन्मन्यस्मिन् पितृभ्यामपि निरवधिकप्रेमभारेण भूयः।
श्रीकृष्णो वासुदेवो वरमणिखचिते देवतामन्दिरेऽव-
स्थाप्य क्षेमं व्यतानीदनुपधि निखिलक्षोणिभाजां जनानाम्॥१९॥

प्रबन्धः

आलोच्यमानमधुराणि बलेन साकम्
कर्माणि नर्मरुचिराणि बहूनि कृत्वा।
वैकुण्ठनाम निजधाम मनोज्ञधाम
गन्तुं मनः कलितवान् कमलायताक्षः॥२०॥

गद्यम् ॥७॥

अचिन्तयत् च

प्रबन्धः

मत्तो लब्धसमीहिताः सयदवो वृष्ण्यन्धकाद्या इमे
मत्ताः प्राप्य जनार्दनत्वमितरैरप्राप्यमिष्टार्थदम्।
मोक्षायाखिलदेहिनामलमुपायेनाद्य केनाश्रमं
ह्येषां संक्षयत स्वकृत्यनिवहं निःशेषमापादये॥२१॥

प्रबन्धः

यस्येच्छामात्रजातं जगदिदमतुलश्रीयुता नाट्यशाला
सप्तद्वीपा तु तस्यां जलनिधिरशना केलिरंगस्थली च।
शैलूषस्यास्य तस्य प्रतिनवरमणीयार्थलीलस्य
संकल्पाकृष्टा द्वारवत्यां त्रिचतुरमुनयः प्रादुरासन् दिनान्ते॥२२॥

गद्यम् ॥८॥

तदनु परमर्षयस्ते वासुदेवस्य वासावसथं प्रविश्य तत्र प्रत्नवररत्नमयरत्नासनमलंकुर्वाणस्य, निर्वाणप्रदप्रसरीसृप्यमाणकमनीय-कायकान्तिनिकायनिष्कासितपुष्कलतरतापिच्छनीलाम्बरश्यामांबुद-कालाम्बुधिकलायकुसुमसीमातिगसुषमामदभरस्य, मुकुटकटक-मकरकुण्डलकेयूरजाम्बूनदाम्बरमेखलादिविभूषितस्य, कौस्तुभश्रीवत्सव-नमालाविराजमानदोरन्तरालस्य, कुंकुमपंकांगरागबन्धुरांगस्य, शारदशत-पत्रपत्रसगोत्रनेत्रयुगलस्य, कस्तूरीतिलकोल्लसत्फालफलकस्य, कटाक्ष-पातयमुनाजलसंक्षालितभक्तदुरितपांसुपटलस्य, करपंकजलालित-

लीलाकमलस्य, निखिललोकपारिजातस्यापि अपारिजातस्य, अपार्थ-स्यापि पार्थसखस्य, हिरण्यहरस्यापि वरेण्यानुभावस्य, निश्चेष्टितस्यापि सुचेष्टितजनचित्तविष्टरप्रविष्टस्य, कृशोदरस्यापि दामोदरस्यापि कुक्षिगतसमस्ताण्डभाण्डस्य, पक्षरहितस्यापि पक्षिवरकेतनस्य, सच्चित्तानन्दरूपस्य सच्चिदानन्दस्वरूपस्य श्रीकृष्णस्य दूरादेव दर्शनेन विस्मृतान्यविचाराः, परिप्रीत्या नन्दनवनीमिव वनीपकाः, माहेयीमिव वत्सकाः, विद्यामिव उद्बणा गुणाः मन्त्रमिव मन्त्रार्थाः, प्रभुमिव प्रेष्याः, महायोगिनमिव महनीयसिद्धिविशेषाः, सारसिनीमिव कलहंसाः, परतत्त्वमिव निगमान्तशब्दाः, प्रजेश्वरमिव प्रजाः, प्रजापतिमिव सनकादयः, भूतनाथमिव विभूतयः, हुतवहमिव आहूतयः, सवितारमिव गायत्रीपादाः तं प्रायशः समाप्तावतारकृत्यं सप्रश्रयमुपासेदुः।

प्रबन्धः

आवन्द्य गोविन्दमनेकजन्मपुण्यैकलभ्यं प्रतपस्विनस्ते।

तेनापि भक्त्या परिपूजिताश्च प्रतस्थिरे मन्दिरतः प्रसन्नाः॥२३॥

गद्यम् ॥९॥

तांस्तथा गतसञ्चरानपि राजपथेन सञ्चारमाणान्, दिनान्तभास्कर-प्रशान्तसन्तापान्, सत्यसंकल्पान्, भस्मरुद्धानिव जातवेदसः, कद्यादवाः केचित् प्रमदावेषावलम्बं साम्बं पुरस्कृत्य, बद्धकौतुकमुपेत्य विनोद-प्रियतया वा मदविह्वलतया वा भगवदीहया वाऽन्वयुञ्जत, ''अयि भोः परमर्षयः स्त्रीयमन्तर्वत्नी चासन्नप्रसवा च स्त्रीप्रजां वा पुरुषप्रजां वा प्रसोष्यति'' इति।

प्रबन्धः

तेषामास्यात्तु हास्यप्रसृतगिरमिमामप्रतीक्ष्यां निशम्य

क्षुब्धात्मानः क्षणार्धं हरिचरणभृतां स्थूल एष प्रमादः।

क्षन्तव्यो नेति मत्वा जगदुरयि शठाः सोष्यते गर्भिणीयम्

कञ्चित् कार्ष्णायसं हा मुसलमनु च तत् सर्वनाशोऽपि वः स्यात्॥२४॥

प्रबन्धः

अपराधः कृतः कश्चिद् धृतात्मसु महात्मसु।
न केवलं स्वनाशाय वंशनाशाय संभवेत्॥२५॥

प्रबन्धः

साम्बं गर्भे मुसलिनमभिज्ञाय संभ्रान्तचित्ता
गत्वा भूपं तदभिगदितं मानयित्वाऽऽशु शस्त्रम्।
लौहं तत् ते यदुकुलकलंकायिताश्चूर्णयित्वा
प्रास्यन्ति स्मापरजलनिधौ शिष्टखण्डेन साकम्॥२६॥

प्रबन्धः

इच्छा दैवी खलु विजयते शापकृष्टैरिव द्राग्
वीचीहस्तैस्सकलमपि तन्मौसलं धूलिजालम्।
तीरं नीतं बत जलधिना चैरकत्वेन जातम्
चोद्वृतं तज्झषकवलितं लुब्धहस्तं प्रपेदे॥२७॥

प्रबन्धः

अज्ञात्वेवाखिलज्ञो यदुकुलविपदं नो चिराद् भाविनीं ताम्
कालात्मा द्वारवत्याम् सुखमनयदहान्यात्मनः स्वात्मदत्वम्।
स्पष्टीकुर्वन् मुकुन्दः प्रचितभुवनलावण्यसन्दोहदोग्ध्रीम्
मूर्तिं स्वां कल्पयित्वा प्रणतजनदृशाम् सर्वदा सौख्यपेयाम्॥२८॥

प्रबन्धः

कालेऽस्मिन् सह शंकरादिसुरसंघातः समभ्येत्य तम्
नत्वा चित्रपदार्थगीर्भिरजितं स्तुत्वा च हंसध्वजः।
भूभारोऽद्य लघूकृतस्त्रिजगतीनाथेन देव त्वया
तद् यातुं स्वनिकेतनं कुरु मनः प्रीत्येति चाख्यातवान्॥२९॥

प्रबन्धः

याते ब्रह्मणि दुर्निमित्तमधिकं वीक्ष्याथ राष्ट्रे हरिः
प्रोवाच स्वजनान् प्रभासमतुलम् यातुं विपत्तिच्छिदम्।

स्नात्वा यत्र पुरा किल द्विजपतिर्दक्षस्य शापाद्

विनिर्मुक्तः प्राप्य कलाभिवृद्धिमभवत् संकीर्तनीयद्युतिः॥३०॥

प्रबन्धः

तीर्थे स्नानं पितॄणां च तर्पणं देवतार्चनम्।

पात्रे दानं च तरणे तरणिः संकटाम्बुधेः॥३१॥

गद्यम् ॥१०॥

इति कथितवतः कथनीयगुणारामस्य भुवनाभिरामस्य रामानुजस्य मायामनुजस्य वर्षाम्बुदनिकुरुम्बश्यामसुन्दरस्य, मुकुन्दस्य, इन्दिरा-रमणस्य निजधामगमनसन्नाहमभ्यूह्य कृष्णाप्रियः प्रियकृष्णः विष्णुपदी-विशुद्धान्तःकरणः भागवतपंक्तिपावनः धिषणागृहीतनिखिलज्ञान-विज्ञानसारः धिषणावतामग्रेसरः भगवन्तं बद्धाञ्जलिरिद्धविनयमुद्धवः समुपसृत्य, "देवदेव! अवश्यायश्वेतनिःश्रेयसनिदानश्वःश्रेयस-निधानसूरिसंघसमुपगीयमानस्वचरितपरिपालितपावितविश्वप्राणि-सन्दोह! सर्वदा सर्वज्ञोऽपि सर्वशः सर्वगोऽपि सर्वथा सर्वशक्तोऽपि, भवितव्यताप्तेरिताविप्रशापस्य अप्रतीकारतां लोकाय निवेदयन्, औत्पत्तिकमौपलमौपनिषदम् औदासीन्यमवलम्ब्य तिष्ठमान! प्रभासतीर्थ-प्रस्थानमिषेण महाप्रस्थानाय सज्जमान! सज्जनमनोरंगवैकुण्ठवसते! वासुदेव! निमेषमात्रमपि त्वदीयपदविरहासहं संसारभीतिमय-दुष्पारवारिनिधिसन्तरणविद्यानभिज्ञं मामपीतः पीताम्बर! नय स्वयं स्वकीयं निकाय्यम् इति सगद्गदमुदीरयन् बहुकृत्वः प्राणंसीत्।

प्रबन्धः

उत्थाप्य दीनकरुणानिधिरुद्धवं तं प्रेमाश्रुपूर्णनयनं परिरभ्य गाढम्।

पीयूषसारमधुरं नवीनतमुग्धस्निग्धं जगाद वचनं हरिरम्बुजाक्षः॥३२॥

प्रबन्धः

द्वैतादेव भयं यदुत्तम जगद् विभ्रान्तिमात्रं किल

प्रेम्णा मय्यखिलात्मनि स्थितिभृता साध्यं तु संसाधय।

त्यक्त्वा मद्विरहव्यथां भज तपश्चर्यां बदर्याश्रमे

कर्तव्यं पुनरस्ति किञ्चन सखे! साधो! समाकर्ण्यताम्॥३३॥

प्रबन्धः

रसं सहृदयेष्वद्धा विकिरन् रंगसीमनि।

नटो नाट्यं समाप्यांग! नेपथ्यं गन्तुमर्हति॥३४॥

प्रबन्धः

यद्याते मयि धिष्ण्यमुद्धव! पुरी द्वारावतीयं समा-

क्रान्ता तुंगतरंगघोषपरुषेणोदन्वता नो चिरात्।

यावन्मङ्क्ष्यति न प्रियाशय सखे तावत्त्वया वैष्णावी

रक्ष्या मूर्तिरसंशयं क्षितिजुषां क्षेमाय सा देहिनाम्॥३५॥

प्रबन्धः

मद्यसेवा मनुष्याणाम् वेश्येव हृदयंगमा।

पुष्णाति प्रियमुद्वेलम् मुष्णाति हितमञ्जसा॥३६॥

प्रबन्धः

मद्यं वर्ज्यं समेषामुपदिशति कविः सर्वशास्त्रार्थदर्शी

येन भ्रान्ता मनीषा जगदिदमतथेवेक्षते सर्वमेव।

पाता जाहस्यतेऽस्य क्षितितललुठनो निस्त्रपः स्रस्तवस्त्रो

मध्ये जल्पन्ननल्पं स्वरविकृतिकरो विस्मरन् कार्यजातम्॥३७॥

गद्यम् ॥११॥

यथा च, भगवतो निदेशेन शंखोद्धारतीर्थं प्रेषितेषु प्रवयोबाल-वनिताजनेषु, शिष्टाः सर्वेऽपि दौवारकेयाः दाशार्हवृष्ण्यन्धकभो-जार्बुदसात्वतमधुमाथुरशूरसेनविसर्जनकुकुरकुन्त्यादिवंश्याः प्रभास-तीर्थमनुप्राप्य निर्वर्तिताभिषेकपितृसवितृतर्पणान्नवस्त्रगोहिरण्यदाना-दिविविधसत्क्रियाः विपत्तिप्रतिविधानधिया समाश्वस्तचित्ताः पुनरुर्वराभारनिर्वापणार्थमवतीर्णस्य विश्वंभरस्य दुर्वारप्रेरणबलाद् वासनाबलाच्च सायन्तनसूर्यवन्निषेवितवारुणीकाः, अहंकारा इवांगी-कृतांगाः उदारचरिता इव विस्मृतस्वपरभेदाः, गुरुजनेष्वप्रवणताम् उदाहरन्तः, कैलासकटका इव भूताविष्टाः, मदविह्वलतया कृत्याकृत्य-

विवेचनभ्रष्टाः, समारब्धगर्जनतर्जनकूर्दनमर्दनबहुजल्पनाकारवृथामिथः-कलहाः, गृह्णामि निगृह्णामि बध्नामि, मथ्नामि दण्डयामि मुण्डयामि पिण्डयामि चपेटयामि, कुट्टयामि, घट्टयामि, चक्रयामि, क्रकचयामि, मुद्गरामि, परशयामि, परिघयामि, खड्गयामि, मुसलयामीति सिसमरिषया मुहुर्मुहुरन्योन्यं अभिभाषमाणाः प्रेतागारिक-वराकषण्ड-कुण्डगोलककाणबधिरमूकह्रसिष्ठद्राघिष्ठकुण्डोदरलम्बकर्णकुम्भीन-संघटनासन्धुमण्डूककीटशलभगेहेशूरमातरिशूरविकटदंष्ट्रवृत्ताक्ष-मर्कटकर्कटकार्कोटककान्दिशीकेत्यादिपारस्परिकपरिहासोपाह्वाननिरताः, समृद्धमानगर्धितयुद्धकर्माणः सहसापरिबद्धवर्माणः, उष्ट्रिनः अश्विनः रथिनः खरिणः वृषभिणः महिषिणः गजिनश्च पोपुष्यमाणरोष-समुद्यतचापासिप्रासपट्टसगदातोमरर्ष्टिमुसलमुद्गरकुठारशक्तिशूलप्रमुखविविधा-युधाः, पुत्राः पितृभिः, अनुजा अग्रजैः, स्वस्रीया मातुलैः दौहित्राः पितृव्यैः, मित्राणि मित्रैः, बन्धवो बन्धुभिर्युध्यन्तः, क्षीयमाणेषु शस्त्रेषु मुनिशापोपसृष्टान् मुष्टिभिरेरकान् हरन्तः तैर्वज्रप्रतिमपरिघायितैरितरेतरं तथा प्रजहिरे यथा वैणवेनाग्निना वनमिव, वातूलेन कदलीवनमिव च निखिलमपि यदुकुलं नष्टचेतनं परिणतं यद् दृष्टवा हलकेतने बलरामे समुद्रवेलायां पौरुषं योगमास्थाय मानुषं रूपं विहाय शेषतां प्राप्ते, कृतकृत्यतामाप्तः शेषशायी जिष्णुरपि धिष्ण्यं स्वमुष्णकर-कोटिप्रकाशमप्यनुष्णकरकोटिशीतलं, तृष्णाविवर्जितमपि निजा-वलोकनतृष्णाऽऽकुलाशयपार्षदकुलनिषेवितम् अण्डजेन्द्रमहिष्ठलक्षण-ध्वजमण्डितं वैकुण्ठं आहिण्डितुमाचकांक्ष।

प्रबन्धः

> भृत्वा रूपं घनाभं दरकमलगदाचक्रदोश्चक्ररम्यं
> श्रीवत्सांकं मनोज्ञस्मितमधुरमुखं दक्षिणोरौ स्वपादम्।
> कृत्वाऽऽसीनं मृगद्युः पदि हरिणधिया पिप्पलद्रोरधस्ता-
> च्छप्तायःखण्डनिर्वर्तितविशिखकरोऽविध्यदंभोजनाभम्॥३८॥

प्रबन्धः

> संयाज्यात्मानमात्मन्यनुपमरुचिरे पद्मनेत्रे निमील्य
> स्वांगं लोकाभिरामं सकलमनुभृतां धारणाध्यानयोग्यम्।

योगाग्नौ खल्वदग्ध्वाऽविदितगतिरगाद् धाम नैजं समक्षम्
ब्रह्मादीनां प्रपञ्चोदयविलयविभुः शौरिरानन्दमूर्तिः॥३९॥

गद्यम् ॥१२॥

अथ सप्तमेऽहनि हलायुधचक्रायुधविनाभूतां द्वारावतीं अबलमिव बलिनं, ओदनमिव जिघत्सुम्, आक्रम्यात्मसात्कर्तुमुद्यतम् उल्लोल-कल्लोलहल्लोहलविभीषणं अपराम्बुधिमवगम्य, तां प्रायः कवलितां चावलोक्य समुत्कलिकाभरोद्विग्नमनाः उद्धवः पुरुदयाकरं स्वगुरु-ममरगुरुं गुरुं सहायमधिगम्य, निजालयस्य रत्नाकरप्रथायाः साफल्य-मुद्घोषयितुमिव वरुणेन समुद्रहस्तैः उच्चैः प्रदर्श्यमानः तरंगपंक्तिषु दोलालीलां कुर्वाणं प्रमोदनानामपि प्रमोदनम्, प्रणमनीयामपि प्रणमनीयं, प्रणवनीयानामपि प्रणवनीयम्, विस्मयनीयानामपि विस्मयनीयं दर्शनीयानामपि दर्शनीयं हरिर्विग्रहं आनिलेनानुकूल्येनाभ्यागम्य, उत्ताल-सम्मदोत्तरळचित्तः तद्रक्षणोपायमालोक्य तत्कान्तिप्रसरसुभगतरेण गगनपथेन सञ्चरमाणः प्रविश्य केरलधरणीभागं, अस्य विलोचना-सेचनकमारकतमणिकान्तिबन्धुरतया भृगूद्वहघटोद्वादिमुनिसत्त-माध्युषितत्वात् आत्मोत्कर्षदायितया च समाकृष्टचेताः पश्चिम-पारावारस्य नातिदूरे समुत्फुल्लसहस्रदलमनोहरं सरोवरं संवीक्ष्य तत्र निष्णातं कृष्णपदीधरं भगवन्तं चन्द्रशेखरं च निरूप्य समभिष्टुत-परितुष्टेनाष्टमूर्तिना तेनोपदिष्टः तटाकस्य तस्य दक्षिणतः पक्षिरथार्हं स्थानमुररीकृत्य उरसीकृत्य च शुभे मुहूर्ते मूर्तिं तां गुरुमारुताभ्यां प्रतिष्ठापयामास, येनेदं पदं गुरुवायुपुराख्यया भगवानपि गुरुवायु-पुरेशाख्यया लोके पुनः प्रतिष्ठामगमताम्।

प्रबन्धः

निर्माय रमणीयेऽत्र निर्मिते विश्वकर्मणा।
इन्दिरारमणो भाति मन्दिरे सुन्दराकृतिः॥४०॥

प्रबन्धः

कुरुनरपतिवंशकीर्तिकेतो! कुरु गुरुवायुपुरेशमूर्तिसेवाम्।
उरुतरकरुणाकरः स नूनं गुरुगदहारिचिकित्सयाऽऽर्तिहन्ता॥४१॥

प्रबन्धः

आत्रेयस्य गिरं सुधाकिरमरं कर्णद्वयेनाऽऽपिब-

न्नात्रेयान्वयपद्मिनीदिनकरः पारीक्षितः सत्वरम्।

भक्त्युद्रेकभृशद्रुतेन शरणं तं चेतसा जग्मिवा-

नाधिव्याधिचिकर्तिषुर्गुरुमरुद्गेहाधिनाथं हरिम्।।४२।।

गद्यम् ।।१३।।

तदनु सौवस्तिकेन करुणातिरेकमसृणीभूतमानसेन निश्शेषदृश्वना विश्वकल्याणचिकीर्षुणा मुनिपुंगवेन साकमौपजानुकभुजो जनमेजयो निर्वाहितनिखिलप्रास्थानिकमांगलिकविधानो गुरुमरुत्पत्तनसिषत्सा-प्रोत्साहितहृदयः प्रस्थाय निजपुटभेदनाद् अजितपदप्रवेशार्हतां प्रपित्सुरिव अनेकानि अनर्थसार्थकदर्थनसमर्थानि तीर्थानि मध्येपथं निषेव्य केरकेदारभूतां धराम्बुधिमध्यगां पिण्डीकृतभुवनसौन्दर्यखण्डैस्तत्रतत्र-पतितैरिव सस्यश्यामलशैलकूटव्रजैर्विराजमानां भारताम्बिकाऽऽपाद-लम्बमानपुष्कलकेशपाशान्तपौष्पपरिष्कारायिताम् अनवरतकलविरुत-निरवधिकशुकशकुनिगायमानकृष्णगुणनिकायां विमलजलतरंगिणीझल-झलारवप्रशस्यमानप्रकृतिरामणीयकां केरलधराम् अच्छपत्य-धर्मजाता-वलम्बमहादयहृदयमहोदयोदयमहीपतिमहीयमिति समुदयमानबहुमानः परिपक्वदाडिमफलपाटलिम्नि न हिमधाम्नि अपश्चिमगिरि-श्रृंगपुनरुत्पतनाय पतति पश्चिमसरस्वति हरिवृतां अपरामिव द्वारावतीं पुरुविनयप्रसरपुरुहूतप्रमुखसुरजाताभिवन्द्यां गुरुपवनपुरीं कच्छरमण्डल-ककच्छुरांगो राजा कण्टकितांगः प्रविवेश।

गद्यम् ।।१४।।

पुनरन्येद्युःप्रभृति प्रतायमानप्रणयप्रत्ययपुरस्सरं प्रविहितनियमा-नुष्ठानप्रयासपूर्वकं प्रतिदिनं पञ्चकृत्वः प्रणतिप्रणुतिप्रदक्षिणादिभिरर्चयामास कुरुपतिर्निजदुरितनिशान्ताय गुरुपवनपुरनिशान्तं भगवन्तं रमाकान्तम्।

प्रबन्धः

प्रातर्नमामि भगवन्! प्रणिपातमात्रप्रीतान्तरंग! मम रोगमपाकुरुष्व।

येनाऽकुलस्य नृहरे! नरजन्म विष्ठागर्तस्थकल्पलतिकासुमकल्पमास्ते।।४३।।

प्रबन्धः

पूर्वाह्ने पुरुषोत्तमांघ्रिकमलद्वन्द्वं नतोऽस्म्यास्थया
यस्मिन्नापतति स्वभक्तजनताभृंगावली सन्ततम्।
तद्रेणुव्रजलेपनेन शमितव्याधिः कदा जीवितं
नेष्यामि प्रियबन्धुभिः सह परिप्रीत्या दयावारिधे!॥४४॥

प्रबन्धः

मध्याह्ने नौमि देव! प्रतिनवजलदश्याम! सोमाभिराम-
श्रीलास्य! श्रीपते! त्वां प्रणयभरहृदा सर्वतापोपशान्त्यै।
कारुण्येनांभसा त्वं निखिलगदहरेणांगमेकान्तगर्हा-
संगं सिक्त्वा मदीयं कुरु गलितरुजं वातगेहाधिवासिन्!॥४५॥

प्रबन्धः

सायंकालेऽच्युत! त्वामरिजलजगदाशंखपाणिं भजेऽहं
व्याधिं मे च्छिन्धि पत्रिध्वज! भुजगकुलध्वंससिद्धं प्रवृद्धम्।
नो चेदार्त्या महत्या विदलितहृदयो मृत्युमेवाश्रयिष्ये
तन्मामव्याजभक्तं रचय कुशलिनं केवलं दृष्टिपातैः॥४६॥

प्रबन्धः

वन्दे भवन्तमजितं जितपञ्चबाणम् श्रीवासुदेव! कमला खलु तिष्ठते ते।
उल्लाघतार्थमनुगृह्य पदाब्जभृत्यम् मां दीनमेनमवरोधगृहं विश त्वम्॥४७॥

प्रबन्धः

एवं तस्य मुनीश्वरस्य परमाचार्यस्य वाचा रसा-
दैदंपर्यमनादिनैगमगिरामाराध्यमाराध्यतः।
राध्वा श्रीगुरुवायुमन्दिरगतं नारायणं श्रीहरिं
स्वस्थोऽभूज्जनमेजयः कतिपयैर्मुक्तोंऽहसो वासरैः॥४८॥

प्रबन्धः

आविर्भूय हरिर्नृपस्य पुरतः स्वप्नेऽब्रवीन्निर्हृता-
न्यागांस्यंग! कुरुप्रवीर! भजने नानन्यभक्त्या मयि

पात्वा साधु निजप्रजा जनकवन्मुक्त्वा वपुर्मानुषं

वस्त्वं मामकमेहि सर्वविपदामन्यूनसिद्धौषधम्।।४९।।

प्रबन्धः

तल्पोत्थितो नरपतिर्निजमूर्तिमारादालोक्य रोगरहितां नवकाञ्चनाभाम्।

स्वप्नेऽनुभूतमिव सर्वममंस्त कुष्ठं स्वप्नोपमं जगदिदं हि विवेकभाजाम्।।५०।।

गद्यम् ।।१५।।

जय जय स्वामिन्!

मदीयामयापत्तिघातिन्!

पयः सागरान्तर्मणिद्वीपकुण्ठेतराभोगवैकुण्ठपुटभेदने मधुरिमैकभवने धवलिमैकसदने भुजगभोगाकल्पितानल्पसुभगतरतल्पे निराबाधशायिन्!

निरायासनीलामलापांगवीक्षोपसृष्टप्रदर्शितानन्तकोटिप्रपञ्चस्थितिविहति-विहृतिरसपायिन्!

पवनाशनाभरणपुरुहूतवह्नियमपुण्यजनवरुणपृषदश्वनखाहमुखदेवगण-पत्रिवरवन्द्यशुभसर्वंसहासरससंवाह्यमानचरणयुगशोभिन्!

नाभिकमलान्तरुपविष्टचतुरास्यपुरतःस्थितप्रमुखसनकादिमुनिवृन्दचतुराननां-भोजगलितचतुराम्नायसूक्तिमधुसेवासुखस्वप्नगाहिन्!

ज्ञानबलपूर्णताग्राहिन्!

दुश्चरितनिर्वहणसच्चरितनिर्मथननित्यनिरतोदग्रभीतिकरनीतिहर-दुर्दान्तघोरतरदैतेयसंहननधृतविविधतिर्यङ्मनुष्यादिवेषिन्!

विश्वकल्याणपोषिन्!

सप्रणयनमदखिलजनकदनघनगहनभवदहनवैदग्ध्यघोषिन्!

मधुमधुरभाषिन्!

कारुण्यमासृण्यसौजन्यसौहित्यसौहार्दशालिन्!

सत्यवाक्संकल्पकर्मशीलिन्!

आतुरमनोगह्वरालीननिबिडव्यथारूपतामिस्रखरकिरणमालिन्!

आवरणविक्षेपमायामयांभोधितारिन्!

शतकोटिजन्मकृतनिरुपधिकनिरुपहतबहुसुकृतपरिपूतनरनयनपथगामिन्!

पृथुलदोरन्तरालस्थलीरंगचटुलनटनोत्सवासक्तकमलाम्बकश्रीलकमलालयाभोग्यसौभाग्यसर्वस्वसीमन्!

मञ्जुतरतापिच्छकलायकुसुमचयलावण्यमदहस्तिमस्तकविपाटनपटुतरगभीरहरिवीरधूर्वाहिवरणीयनवनीयकमनीयकायकान्त्यमृतभूमन्!

प्रसरदरुणप्रभापूरनिष्यन्दचारुतरनिस्तुल्यकौस्तुभमणीसंगरमणीयधामन्!

माणिक्यवैडूर्यहरिनीलगोमेदवज्रमुक्तापद्मरागाश्मगर्भप्रवालप्रविरचितपरिशोभमानरहितोपमाननवरत्नहारिन्!

श्रीवत्सधारिन्!

नीरन्ध्रसलिलधरषट्चरणसाहस्रमेचककचग्रहणनैपुण्यपणनीयकेशपरिभासिन्!

मणिखचितपुरटमयकोटीरकेयूरमञ्जीरकाञ्चीगुणश्रेणिवलयांगुलीयादिभूषाविलासिन्!

तरुणतरतुहिनकरतुल्यरुचिलसदलिकसततविततोर्ध्वतिलकिन्!

आनीलसुषमभरकर्णान्तविश्रान्तपतितानुकम्पार्द्रनेत्रयुगलिन्! सुललितकपोलमणिदर्पणप्रतिफलितमकरमणिकुण्डलिन्! उन्निद्रकुन्दसुमनवनीतकुमुदवनबन्धुरुचिमानहरमधुरतरसुस्निग्धमन्दहासिन्!

परिपक्वनवबिंबनवदलितविद्रुमच्छविकलितमृदुलाधारिन्! आपृथुकटिप्रपदलम्बिकनकप्रभसुपीताम्बराडम्बरिन्! सौशील्यवात्सल्यमांगल्यकौशल्यसाकल्यसद्मन्! भक्तिप्रकर्षगतकल्माषहृद्रंगविष्णुपदपीयूषधामन्! अश्रान्तसंक्रान्तकाशकलधौततुहिनततिनीकाशनिरुपमयशोराशिगरिमन्! चिदानन्दनिर्मायनिरुपायसाम्राज्यसिंहासनारूढचक्रवर्तिन्! चक्रदरसारसगदालक्ष्मलक्षितमहाबाहुचक्रिन्! षट्चक्रसञ्चारिसम्मोदपीयूषपरिवेषणव्यग्रपरतत्त्वसत्यप्रकाशस्वरूपिन्! अमरगुरुपवनपुरसत्क्षेत्रवसतिसुखपर्याप्तविस्मृतसुधांभोधिवेशमन्!

प्रसीद प्रसीद प्रसीदानन्तनिरतिशयविक्रमैश्वर्यवीर्यशौर्यौदार्यगांभीर्यचातुर्यसारस्यधामन्!

निगमान्तजालजेगीयमाननिरवद्यमहिमन्!

निर्द्वैतनियमिजनपेपीयमाननवसुधायमानापदानबहुरूपनामन्! निखिलभूतान्तरात्मन्!

नमस्ते! नमस्ते! नमस्ते!

इत्यभिष्टूय कार्तज्ञ्यगलदश्रुधारो जनमेजयो गुरुमरुन्नगरीनिवासं जगन्निवासम् आत्मबन्धुमखिलात्मबन्धुं चरणप्रपन्ननिजसन्ताप-सन्दोहकद्रुसुतविद्रोहिविनतासुतं श्रीकृष्णम् आत्रेयपुरःसरो हस्तिनपुरं प्रत्यढौकत।

प्रबन्धः

धनतोऽन्ने तुद पानं मैरेयस्यापदां निदानं तत्।

लक्षय कृष्णसहायान् पीत्वा पतितान् मदेन गलितासून्।।

प्रबन्धः

प्रबन्धमञ्जः कथनोत्सुकानाम् प्रयोजनार्थाय निबद्धमेतम्।

श्रीवासुदेवाय गुरूत्तमाय विद्याधिराजाय समर्पयामि।।

●

श्रीगुरुवायुपुरेशमाहात्म्यकर्ता
प्रो.ए.वी.शंकरन्
(१२.१.१९२५-३१.३.२०००)

श्रीगुरुवायुपुरेशमाहात्म्यकर्तुरात्मजा
श्रीमती प्रेमलता वी. वी.
देवनागरीलिप्यन्तरणकर्त्री

# कविसहस्रनामशतकम्

– डा. 'अभिराज' राजेन्द्रमिश्रः

आदौ कवीश्वरान् वन्दे वेदमन्त्रौघसर्जकान्।
[1]वामदेवाऽत्रि[2]कण्वा[3]दीन् वशि[4]ष्ठौचथ्य[5]कर्दमान्[6]।।१।।

पाणिनिं[7] वय्याकरणं जाम्बवतीजयङ्करम्।
सङ्ग्रहकारकं [8]व्याडिं कोहलं[9] नन्दिकेश्वरम्[10]।।२।।

नाट्यशास्त्रकविं वन्दे भरतं[11] रङ्गदैवतम्।
महाभाष्योद्धृतान् वन्देऽप्यनाम्नश्च कवीश्वरान्।।३।।

सुमनोत्तराकृच्चै[12]कोऽपरो भैमीरथीकविः[13]।
बलिबन्धनकारश्च [14]तृतीयोऽसौ महीयते।।४।।

अश्मकवंशकारोऽपि [15]भामहेन समुद्धृतः।
[16]सुबन्धुदण्डि[17]बाणाश्च[18] गद्यकाराः सुविश्रुताः।।५।।

भट्टारहरिचन्द्रोऽसौ[19] सोड्ढलो[20] भट्टवामनः[21]।
धनपालश्च[22] बल्लालः[23] ख्यातस्समरपुङ्गवः[24]।।६।।

मैथिलकोकिलो विद्यापतिनामा कवीश्वरः[25]।
गद्ये व्यासोऽम्बिकादत्तश्चरमश्च[26] महीयते।।७।।

बृहत्कथाकथावर्त्मसंस्कर्तारो जयन्ति ते।
सोमेश्वरो[27] बुध[28]स्वामी क्षेमेन्द्रश्च[29] महाकविः।।८।।

पञ्चतन्त्रप्रणेताऽसौ विष्णुशर्मा महामतिः[30]।
हितोपदेशकर्ता च नारायण[31] उदारधीः।।९।।

वेतालपञ्चविंशत्या शिवदासो[32] महीयते।
कृता वल्लभदेवेना[33]ऽप्यपरा पञ्चविंशतिः॥१०॥

क्षेमेन्द्रमुनिना[34] यद्वा वररुचिना[35] कृता कथा।
सिंहासनद्वात्रिंशी सा भोजैश्वर्यप्रकाशिनी॥११॥

चिन्तामणिभट्टकृता[36] रुचिरा शुकसप्ततिः।
द्वात्रिंशी भरटकानां मुनिसुन्दरगुम्फिता[37]॥१२॥

प्रबन्धचिन्तामणिकृन्मेरुतुङ्गो [38]जयत्यसौ।
प्रबन्धकोषकर्ता च सूरिस्स राजशेखरः[39]॥१३॥

प्रभाचन्द्रो[40] जिनचन्द्रः[41] कृतवन्तौ मिथः कथाम्।
गद्यकथाकोषनाम्नीं कथासङ्कलनामयीम्॥१४॥

कथारत्नाकरं चक्रे सूरिस्स नरचन्द्रकः[42]।
दीक्षितो रङ्गनाथश्च[43] गुणमन्दारमञ्जरीम्॥१५॥

कादम्बरीमभिनवां नरसिंहोऽप्यहोविलः[44]।
श्रीकृष्णाभ्युदयं चक्रे विद्वाञ्छ्रीशैलदीक्षितः[45]॥१६॥

गद्यचिन्तामणिं कृत्वा कीर्तिं लेभे कवीश्वरः।
वादीभसिंहसंज्ञोऽसौ [46]गद्यैश्वर्यप्रकाशकः॥१७॥

कथाकौतुककारोऽपि श्रीवरो [47]गद्यसर्जकः।
मन्दारवतीकारश्च कृष्णशर्मा [48]महीयते॥१८॥

विश्वेश्वरश्च पाण्डेयः[49] कृत्वा मन्दारमञ्जरीम्।
अधिगद्यं यशोऽवाप परमं मालवेश्वरः[50]॥१९॥

साम्प्रतं सादरं वन्दे मान्यान् पद्यकवीश्वरान्।
वाल्मीकि[51]व्यास[52]सत्कीर्तिप्रभासन्ततिभास्वरान्॥२०॥

कविवंशगुरुस्तत्र कालिदासो[५३] महीयते।
योनुतिष्ठत्यहोऽद्यापि कनिष्ठाधिष्ठितोऽद्वयः॥२१॥

उक्त्यन्तराऽशक्यमर्थं पदबन्धैः प्रकाशयन्।
स एक एव विश्वेऽस्मिन् कालिदासो न चाऽपरः॥२२॥

महाकाव्यद्वयं खण्डकाव्यञ्च नाटकत्रयम्।
प्रणीय यस्समानर्च साऽद्रिजं नीललोहितम्॥२३॥

नमामि भारविं[५४] माघं[५५] भट्टिं[५६]श्रीहर्षपण्डितम्[५७]।
अश्वघोषं भदन्तं तं सुवर्णाक्षीसुतं कविम्[५८]॥२४॥

विल्हणं[५९] कल्हणं[६०] वन्दे जल्हणं[६१] भल्लटं[६२] बुधम्।
रत्नाकरं[६३] भर्तृमेण्ठं[६४] मङ्खकं[६५] नीलकण्ठकम्[६६]॥२५॥

दामोदरं[६७] च क्षेमेन्द्रं[६८] व्यासदासाऽपराभिधम्।
आनन्दवर्धनं[६९] सूरिं शिव[७०]स्वामिनमप्ययम्[७१]॥२६॥

पण्डितराजनामासौ जगन्नाथः[७२] कवीश्वरः।
जयत्यमरुको[७३] लोके धोयी[७४] च घटकर्परः[७५]॥२७॥

वेदान्तदेशिको[७६] राजचूडा[७७]मणिस्स दीक्षितः।
हेमचन्द्रो[७८]ऽरिसिंहश्चा[७९]ऽमरचन्द्र[८०] उमापतिः[८१]॥२८॥

गीतगोविन्दगाताऽसौ जयदेवो[८२] जयत्यहो।
सरणी रागकाव्यानां येन लोके प्रकाशिता॥२९॥

कवीन् स्तोत्रकृतो बाणं[८३] पुष्पदन्तं[८४] जगद्धरम्[८५]।
[८६]गोवर्धनमभिनन्दं [८७]मयूरं [८८]बिल्वमङ्गलम्[८९]॥३०॥

नारायणं[९०] मूककविं[९१] कविञ्च कुलशेखरम्[९२]।
दीक्षितं रामभद्रं[९३] च लक्ष्मीधरमु[९४]पाह्वये॥३१॥

धनञ्जयञ्च[९५] धनिकं[९६] धनपालं[९७] जिनोत्तमम्।
वाक्पतिं मुञ्जदेवं[९८] च पद्मगुप्तं [९९]नमाम्यहम्।।३२।।

चित्तपं[१००] केशटं[१०१] वन्दे योगेश्वर[१०२]महाकविम्।
भोजसभ्यान् कवीन् सर्वान् कवीन्द्रं राजशेखरम्[१०३]।।३३।।

विद्याकरो[१०४] वटुदासः[१०५] श्रीवरश्[१०६]चापि वल्लभः[१०७]।
[१०८]जल्हणोऽसौ शार्ङ्गधरो[१०९] जयन्ति संग्रहेषु ते।।३४।।

मधुराविजयकर्त्री गङ्गादेवी[११०] जयत्यसौ।
अन्यावैतिह्यकारौ तौ नयचन्द्र[१११]जयानकौ[११२]।।३५।।

विज्जाका[११३] मोरिका[११४] फल्गुह[११५]स्तिनी चैव मारुला[११६]।
गङ्गा[११७] मधुरवाणी[११८] च कवयित्र्यो बहुश्रुताः।।३६।।

इन्दुलेखा[११९] सुभद्रा[१२०] च ख्याता देवकुमारिका[१२१]।
शिला [१२२]भट्टारिका रामभद्राम्बा[१२३] च सुभद्रका[१२४] ।।३७।।

गौर्जरी प्रभुदेवी[१२५] सा राजशेखरशंसिता।
विकटनितम्बा[१२६] ख्यातिं भेजे पद्यैः समुज्ज्वलैः।।३८।।

गङ्गा तिरुमलाम्बा[१२७] च विजयाङ्का[१२८] जयन्ति ताः
उच्चराजकुलोत्पन्नाः काव्यवर्त्मनि पारगाः।।३९।।

[१२९]चाणक्यविदुरौ[१३०] प्रत्नौ वन्दे भर्तृहरिं[१३१] कविम्।
[१३२]वीरेश्वरं [१३३]रुद्रकविं [१३४]गुमानिं मधुसूदनम्[१३५]।।४०।।

धातुकाव्यकृतं वन्दे वासुदेवं[१३६] हलायुधम्[१३७]।
[१३८]भट्टभीमं पुनर्नौमि रावणार्जुनलेखकम्।।४१।।

नौमि लोलिम्बराजं[१३९] च कविवर्यं जयद्रथम्[१४०]।
उत्प्रेक्षावल्लभं[१४१] चापि भिक्षाटनकरं कविम्।।४२।।

वेङ्कटा[१४२]ध्वरिहर्दत्त[१४३]कवि[१४४]राजधनञ्जयान्[१४५]।
द्विसन्धानकवीन् वन्दे सुमतिञ्च[१४६] चिदम्बरम्[१४७]॥४३॥

मेघविजयोपाध्यायं[१४८] सप्तसन्धानसत्कविम्।
[१४९]सामराजकाम[१५०]राजव्रजराजान्[१५१] नमाम्यहम्॥४४॥

चम्पूकारांस्ततो वन्दे येषामाद्यस्त्रिविक्रमः[१५२]।
विदधे नलचम्पूं यस्ततश्चम्पूं मदालसाम्॥४५॥

यशस्तिलककारोऽसौ सोमदेवो[१५३] महीयते।
जैवन्धरो हरिचन्द्र[१५४]स्सोड्ढलः[१५५] सुन्दरीकथः॥४६॥

[१५६]भोजदेवोऽनन्तभट्टौ[१५७] सरामायणभारतौ।
आनन्दवृन्दावनकृत् कर्णपूरो [१५८]महाकविः॥४७॥

भागवतचम्पूं चक्रेऽभिनवकालिदासभाक्[१५९]।
गोपालं जीवगोस्वामी[१६०] नृसिहं सूर्यसंज्ञकः[१६१]॥४८॥

मित्रमिश्रश्च[१६२] शेषश्रीकृष्णो[१६३] नारायणस्तथा[१६४]।
[१६५]रघुनाथो [१६६]नीलकण्ठो गोवर्धन[१६७]स्तथाम्मलः[१६८]॥४९॥

आनन्दरङ्गविजयं श्रीनिवासः[१६९] प्रणीतवान्।
मिश्रोऽथ पद्मनाभश्च[१७०] वीरभद्राश्रितां कृतिम्॥५०॥

विशालो विग्रहराजो[१७१] मदनश्च[१७२] प्रह्लादनः[१७३]।
[१७४]मोक्षादित्यो [१७५]रामभद्रो मणिको रुद्रभूपतिः[१७६]॥५१॥

विरूपाक्षो[१७७] बाल[१७८]कविब्रह्मसूरिश्च[१७९] पेरुकः[१८०]।
विद्यानाथो[१८१] विश्वनाथो[१८२] जीवरामश्च[१८३] याज्ञिकः॥५२॥

रामदेवश्च[१८४] गोस्वामिरूप[१८५]जीव[१८६]सनातनाः[१८७]।
[१८८]भास्करदत्तगोविन्दौ [१८९]रत्नखेटोऽथ दीक्षितः[१९०]॥५३॥

विलिनाथ[191]सठकोपौ[192] यज्ञनारायणस्तत:[193]।
[194]गुरुरामजगज्ज्योति:[195] वादिचन्द्र[196]शिशवेन्द्रक:[197]॥५४॥

अकबरशाही[198] देवराजोऽथ[199] पद्मसुन्दर:[200]।
भूदेवश्च[201] जगन्नाथो[202] वल्लिशायश्च[203] शङ्कर:[204]॥५५॥

पद्मा[205]नन्दोऽवतारश्च[206] शोभ[207]नोजिनवल्लभ:[208]।
[209]जम्बूगुरुर्देवनन्दी [210]सिद्धसेनदिवाकर:[211]॥५६॥

वेङ्कटनाथ[212]तैलङ्गव्रजनाथौ[213] गदाधर:[214]।
लोष्टको[215] वादिराजश्च[216] पण्ढरीविह्वलस्तथा[217]॥५७॥

कृष्णानन्द[218]कवीन्द्रोऽसौ मधुसूदनमैथिल:[219]।
आच्चा[220] लक्ष्मीनृसिंहश्च[221] गीर्वाणेन्द्रोऽथ दीक्षित:[222]॥५८॥

दक्षिणा[223]मूर्तिदैवज्ञ[224]सूर्यमोहनसंज्ञका:[225]।
लक्ष्मण[226]-चन्द्र[227]-विजया[228] रुद्रमाणिक्यसूरय:[229]॥५९॥

अन्योक्तिरचनाकारो दुजन्तिर्मधुसूदन:[230]।
गणी विजयनामानौ कवीन्द्रौ हंसदर्शनौ[231]॥६०॥

कविरत्नश्चक्रवर्ती[232] एकनाथश्च काश्यप:[233]।
रघुनाथ[234]तीर्थशशम्भु[235]श्चन्द्रचूड[236]सदाशिवौ[237]॥६१॥

अरुणो गिरिनाथश्च[238] रङ्गाचारी[239]जनार्दनौ[240]।
[241]वीरेश्वरो महेशाख्यो[242] मनीषी कृष्णवल्लभ:[243]॥६२॥

महिषमङ्गलो[244] राम: पाणिवादश्च[245] लक्ष्मण:[246]।
[247]धर्मपण्डितगोविन्द[248]चन्द्रौ च शिवशङ्कर:[249]॥६३॥

नृहरि:[250] कुसुमदेवो[251] भट्टपादनरायण:[252]।
[253]धनदो गिरिधरोऽसौ[254] विद्यावागीश [255]उत्तम:॥६४॥

सोमनाथ[२५६]घनश्यामौ[२५७] सजगन्नाथपण्डिता:[२५८]।
अन्यापदेशकारास्ते ख्याताः संस्कृतवाङ्मये॥६५॥

पुष्पदन्तश्च[२५९] लङ्केश:[२६०] शङ्करो[२६१] बुधकौशिक:[२६२]।
मूको जगद्धर[२६३]श्चैते स्तोत्रकाराश्चिरायुष:॥६६॥

प्रतीहारेन्दुराजश्च[२६४] नमिसाधु[२६५]र्जयद्रथ:[२६६]।
वेङ्कटमाधव:[२६७] स्कन्दो[२६८]ऽप्युव्वटश्च[२६९] महीधर:[२७०]॥६७॥

[२७१]यास्को [२७२]दुर्गो जयादित्यो[२७३] वामनश्चापि[२७४] सायण:[२७५]।
[२७६]वसुकल्पोत्पलौ [२७७]सोमानन्द[२७८]कल्लट[२७९]कैयटा:[२८०]॥६८॥

[२८१]भट्टोजिकौण्डभट्टौ[२८२] तौ भट्टनागेशशाब्दिक:[२८३]।
जयन्त्येते महाचार्याः शतसंख्या महीतले॥६९॥

वल्लीसहाय:[२८४] श्रीकण्ठ:[२८५] बालगोदावरीकवि:[२८६]।
रामानुजदासकृता[२८७] चम्पू रामानुजाश्रिता॥७०॥

यतिराजजयं चक्रे विरूपाक्षमहोत्सवम्।
चम्पूद्वयं गुणोत्कृष्टं श्रीमत्सूरिरहोबल:[२८८]॥७१॥

चक्रे विश्वगुणादर्शं कविस्स वेङ्कटाध्वरी[२८९]।
यात्राप्रबन्धमातेने श्रीमान् समरपुङ्गव:॥७२॥

तां मन्दारमरन्दाख्यां चम्पूं [२९०]कृष्णकविर्व्यधात्।
भट्टाचार्यश्चिरञ्जीवो[२९१] विद्वन्मोदतरङ्गिणीम्॥७३॥

चित्रचम्पूं लिलेखाऽसौ विद्यालङ्कारसंज्ञक:[२९२]।
[२९३]बाणेश्वरकविर्वरिन् हेस्टिंग्जस्य वशंवद:॥७४॥

नाट्यकारानहं वन्दे [२९४]भासरामिल[२९५]सोमिलान्[२९६]।
[२९७]कविपुत्रेश्वर[२९८]दत्तौ श्यामिलक[२९९]बोधायनौ[३००]॥७५॥

[३०१]शूद्रकमश्वघोषञ्च[३०२] शारिपुत्रस्य सर्जकम्।
ततो [३०३]वररुचिं वन्दे कृतोभयाभिसारिकम्॥७६॥

[३०४]भवभूतिर्मुरारि[३०५]श्चाऽनङ्गहर्षोऽथ[३०६] मायुराट्[३०७]।
विशाख[३०८]दत्तसुभट[३०९]भट्टनारायणादयः[३१०]॥७७॥

प्रसन्नराघवकारो जयदेवोऽथ[३११] मैथिलः।
कर्पूरमञ्जरीकारः कवीन्द्रो राजशेखरः[३१२]॥७८॥

शक्तिभद्रो[३१३] महादेवः[३१४] कृष्णमिश्रोऽथ[३१५] सत्कविः।
[३१६]क्षेमीश्वरो जयत्येव चण्डकौशिकसर्जकः॥७९॥

शतप्रबन्धकर्ताऽसौ रामचन्द्रमहाकविः[३१७]।
वामनभट्टबाणश्च[३१८] वर्मा च कुलशेखरः[३१९]॥८०॥

प्रद्युम्नाभ्युदयकारो रविवर्मा[३२०] च सूरिभाक्।
[३२१]जयेज्जयसिंहो कृत्वा हम्मीरमदमर्दनम्॥८१॥

विक्रान्तकौरवकृत्स हस्तिमल्लो[३२२] महीयते।
प्रणीतं येन नाटकमञ्जनापवनञ्जयम्॥८२॥

धीरनागोऽथ दिङ्नागः[३२३] कुन्दमालाकरः कविः।
कैरलो युवराजश्च रामवर्मा [३२४]प्रशस्यते॥८३॥

मधुसूदनमिश्रेण[३२५] कृतं दामोदरेण[३२६] च।
हनुमन्नाटकं ख्यातं महानाटकसंज्ञया॥८४॥

जयन्ति नाटिकाकाराः कवयो रङ्गकोविदाः।
तत्र रत्नावलीमादौ हर्षदेवः[३२७] प्रणीतवान्॥८५॥

राजशेखरः कृतवान्स विद्धशालभञ्जिकाम्।
चक्रे मदनपालश्च[३२८] तां पारिजातमञ्जरीम्॥८६॥

कविश्च मथुरादासश्चकार वृषभानुजाम्[३२९]।
कविराजो विश्वनाथश्चक्रे[३३०] चन्द्रकलाभिधाम्॥८७॥

नयचन्द्रोऽथ[३३१] सूरिस्स विदधे रम्भामञ्जरीम्।
मार्कण्डेयकवीन्द्रश्च[३३२] विलासवतिकां दधे॥८८॥

आनन्दसुन्दरीं चक्रे घनश्यामोऽथ[३३३] कैरलः।
चन्द्रलेखां रुद्रदासो[३३४] मानवेदस्य पण्डितः[३३५]॥८९॥

[३३६]यशश्चन्द्रोद्दण्डकवी[३३७] रामभद्रमुनिस्तथा[३३८]।
रामचन्द्रयुताः[३३९] सर्वे ख्याताः प्रकरणक्रमे॥९०॥

दीक्षितो रामभद्रश्च[३४०] वरदाचार्य[३४१]शङ्करौ[३४२]।
[३४३]नल्लाकविर्युवराजः[३४४] कविः काशीपतिस्तथा[३४५]॥९१॥

एते तु भाणकर्तारस्तदनु प्रहसनप्रदाः।
[३४६]महेन्द्रविक्रमो वर्मा कविश्शङ्खधरस्तथा[३४७]॥९२॥

कर्पूरचरितं भाणं हास्यचूडामणिं तथा।
प्रहसनं कृतवान्यो वत्सराजं [३४८]तमाद्रिये॥९३॥

हास्यार्णवप्रहसनं विदधे जगदीश्वरः[३४९]।
धूर्तनर्तकमातेने सामराजश्च[३५०] दीक्षितः॥९४॥

नाट्यं कौतुकसर्वस्वं गोपीनाथः[३५१] प्रणीतवान्।
ज्योतिरीश्वर[३५२] आख्यातः चक्रे धूर्तसमागमम्॥९५॥

प्रतीकनाट्यकाराश्च जयन्ति ते कवीश्वराः।
[३५३]कृष्णमिश्रयशः[३५४]पालजिनवेदान्तदेशिकाः[३५५]॥९६॥

विद्यापरिणयं जीवानन्दनञ्च कृतिद्वयम्।
चकाराऽनन्दरायोऽसौ मखी [३५६]तञ्जेश्वरानुगः॥९७॥

[३५७]अकालजलदाऽद्वैता[३५८]ऽजित[३५९]प्रभचतुर्भुजाः[३६०]।
[३६१]अकलङ्कोऽ[३६२]वधूतोऽसौ [३६३]रामयोगी जिनप्रभः[३६४]॥९८॥

[३६५]अप्रमेयोऽभय[३६६]देवोऽमृतदत्तो[३६७]दयप्रभौ[३६८]।
[३६९]अमोघवर्षोऽवतार[३७०] एक[३७१]नाथोऽर्जुनो[३७२]ऽर्जुनः[३७३]॥९९॥

सुकविर्भेरीभाङ्कार[३७४]: सार्वभौमश्च[३७५] दीपकः[३७६]।
देवेश्वरश्च[३७७] नागम्मा[३७८] श्रीचैतन्यराघवः[३७९]॥१००॥

अरसीठक्कुरः[३८०] सूरवर्मा[३८१] हरिहरो[३८२]ऽचलः[३८३]।
[३८४]श्रीगोविन्दराजेन्द्रकवि[३८५]श्चापि वसुन्धरः[३८६]॥१०१॥

विद्यारण्यश्च[३८७] कुमुदः[३८८] छिन्नमो[३८९] भारतीकविः[३९०]।
श्रीमद्धन[३९१]ददेवश्च क्रीडाचन्द्रो[३९२] हरीगणः[३९३]॥१०२॥

निशा[३९४]नारायणोऽनन्तदेवश्च[३९५] जयमाधवः[३९६]।
[३९७]वाक्पतिराजः श्रीचन्द्रदेवः[३९८] कवित्रिलोचनः[३९९]॥१०३॥

[४००]गोभट्टः श्रीहरि[४०१]हरिदेवो भर्चुश्च[४०२] भोहरः[४०३]।
श्रीदेवगणदेवश्च[४०४] रविगुप्तो[४०५] गुणाकरः[४०६]॥१०४॥

सरस्वती[४०७]कुटुम्बोऽसौ धर्मदासश्च[४०८] बीजकः[४०९]।
[४१०]श्रीकण्ठपण्डितो [४११]बालभारती [४१२]भानुपण्डितः॥१०५॥

[४१३]उत्कटः सिंहदत्तश्च[४१४] दिविराख्यः किशोरकः[४१५]।
[४१६]शकवर्मा [४१७]भद्रस्वामी [४१८]पुष्पाकर-परिमलौ[४१९]॥१०६॥

[४२०]श्रीमदानन्ददेवश्चाऽप्यभिरामपशूपतिः[४२१]।
सरस्वतीकुटुम्बस्य दुहिता[४२२] कमलायुधः[४२३]॥१०७॥

मदालसा[४२४] महादेवी[४२५] लक्ष्मीश्चन्द्रश्च[४२६] रल्हणः[४२७]।
[४२८]प्रह्लादनो वस्तुपालः[४२९] [४३०]प्रकाशवर्षहेतुकौ[४३१]॥१०८॥

[432]वृद्धिर्लक्ष्मणसेनश्च[433] मुक्तापीडश्च[434] राणकः[435]।
भदन्तज्ञानवर्मा[436] च नागपैयश्च[437] श्रीशुकः[438]॥१०९॥

गाङ्गदेवो[439] धर्मकीर्तिः[440] माधवमागधः[441] कविः।
[442]श्रीकर्पूरकविर्भट्टनायको[443] जयवर्धनः[444]॥११०॥

गौडाभिनन्दो[445] नम्मैयो[446] बधिरो[447] जीवनायकः[448]।
श्रीमदुत्पलराजश्च[449] कविश्शक्तिकुमारकः[450]॥१११॥

मालवरुद्रो[451] मातङ्ग[452]दिवाकरसुदर्शनौ[453]।
पण्डितो भीमसिंहश्च[454] कवी राजपितामहः[455]॥११२॥

[456]कविरत्नशर्ववर्मा[457] जयदत्तश्च[458] नग्नजित्[459]।
सर्वज्ञ[460]वासुदेवोऽथ रघुश्च[461] कविदर्पणः[462]॥११३॥

[463]श्रीपालकविराजश्च[464] गोपादित्यश्च[465] सङ्कुलः[466]।
[467]भट्टसोमेश्वरो [468]ब्रह्मयशस्वी शशिवर्धनः[469]॥११४॥

मूर्तकुमारभट्टश्च[470] रुदतीपण्डितः[471] कविः।
गलज्जलो वसुदेवः[472] सत्कविमिश्र[473]चन्द्रकौ[474]॥११५॥

[475]भट्टोपमन्युराकाश[476]पोलिर्निद्रादरिद्रकः[477]।
[478]जघनस्थलीघटकः [479]कर्णोत्पलभिक्षाटनौ[480]॥११६॥

बीजाकरो[481] वासुदेवो[482] देवबोधिश्च[483] पुष्टकः[484]।
[485]छमच्छमिकारत्नश्च धैर्यभिल्लश्च[486] वामनः[487]॥११७॥

[488]अर्गटोऽद्भुतपुण्यश्च[489] शकवृद्धिः[490] प्रभाकरः[491]।
[492]कपिलरुद्र उड्डीयकविस्स[493] धर्मवर्धनः[494]॥११८॥

कविः पुण्यकपोलश्च[495] लोणितकश्च[496] राहुलः[497]।
[498]सोमो दोर्लतिका[499]भीमोऽवन्तिवर्मा[500] कवीश्वरः॥११९॥

[५०१]पद्मश्रीदंग्धमरणः[५०२] कविः राक्षस[५०३]पण्डितः।
[५०४]श्रुतधरो दामोदरदेव[५०५]धाराकदम्बकौ[५०६]॥१२०॥

शिवदासदेवः[५०७] भर्तृस्वामी[५०८] कलश[५०९]शङ्कुकौ[५१०]।
[५११]श्रीचन्द्रगण्डगोपालौ [५१२]श्रीवादीश्वर[५१३]काञ्चनः॥१२१॥

दुर्गसेनो[५१४] जीवनागो[५१५] वराहमिहिरोऽपि[५१६] च।
भट्टरुद्रः[५१७] कृष्णापिल्लो[५१८] [५१९]जयगुप्तेन्द्रसिंहकौ[५२०]॥१२२॥

शाण्डिल्यो[५२१] वामनस्वामी[५२२] देवो [५२३]दिनकरस्तथा।
श्रीदेवगणदेवश्च[५२४] कविर्नाथकुमारकः[५२५]॥१२३॥

[५२६]महामनुष्यगोपालौ[५२७] देवाख्यो देवदासकः[५२८]।
[५२९]सर्वदासो यशोवर्मा[५३०] कविर्भट्टयशाः[५३१] पुनः॥१२४॥

हरिषेणश्च[५३२] सोमेन्द्रो[५३३] हरिदास्[५३४]हरिभास्करौ[५३५]।
सोमप्रभः[५३६] सिंहनन्दी[५३७] सिद्धसेनदिवाकरः[५३८]॥१२५॥

आरराजानकः[५३९] कर्णोत्पलगोभट्ट[५४०] ऊर्जितः[५४१]।
विट[५४२]वृत्ताऽमृतदत्तौ[५४३] मण्डलीको महीपतिः[५४४]॥१२६॥

संकलितं स्फुटं काव्यं येषां विविधसंग्रहे।
कवयः प्रमुखा एते मया नाम्ना प्रकाशिताः॥१२७॥

[५४५]बापूदेवसखा[५४६]रामजयगोपाल[५४७]बङ्किमाः[५४८]।
कान्तानाथश्च[५४९] गोविन्दो[५५०] वेङ्कटेशो[५५१] रमापतिः[५५२]॥१२८॥

[५५३]बालशास्त्री नृसिंहश्च[५५४] विश्वनाथ[५५५]विनायकौ[५५६]।
[५५७]ढुण्ढिराजो [५५८]रामकृष्णो मैथिलः परमेश्वरः[५५९]॥१२९॥

शास्त्री [५६०]गङ्गाधरस्ताराचरणश्च[५६१] विनायकः[५६२]।
शास्त्री दामोदरश्शर्मा[५६३] शिवनारायणोऽपि[५६४] च॥१३०॥

श्रीधरो[५६५] मैथिलोऽनन्तरामभट्टो[५६६] नारायण:[५६७]।
[५६८]ब्रह्मानन्दपूर्णानन्द[५६९]स्तिरुनालश्च [५७०]कार्तिक:॥१३१॥

बिहारीलालनन्दी[५७१] च तिलको[५७२] गौडशङ्कर:[५७३]।
रामनारायणो[५७४] दुर्गाप्रसादो[५७५] दासवल्लभ:[५७६]॥१३२॥

[५७७]रामचन्द्रप्रेम[५७८]चन्द्रावीश्वर[५७९]दत्तबेचनौ[५८०]।
भारद्वाजश्च[५८१] गोविन्द: पर्वतीयोऽथ केशव:[५८२]॥१३३॥

राजेश्वर[५८३]द्राविडोऽसावुदया[५८४]नन्दसोहनौ[५८५]।
[५८६]कपिलोऽथ [५८७]लक्ष्मीनाथो बस्तीरामश्च पण्डित:[५८८]॥१३४॥

मिश्रोऽपि शिवकुमार:[५८९] सिंहोऽथ मकरध्वज:[५९०]।
पाण्डेयकन्हैया[५९१]लालश्चक्रवर्ती नरोहरि:[५९२]॥१३५॥

पञ्चाननकाशीनाथ:[५९३] श्यामाचरणकोविद:[५९४]।
शालिग्रामो[५९५] विश्वनाथो[५९६] दण्डिभट्टश्च[५९७] माधव:[५९८]॥१३६॥

रामगोविन्दशर्मा[५९९] च लक्ष्मीनाथोऽथ[६००] द्राविड:।
विष्णुदत्त[६०१]बालकृष्णौ [६०२]मालवीयो गदाधर:[६०३]॥१३७॥

गोरे राजारामशर्मा[६०४] श्रीचित्रधरमैथिल:[६०५]।
गोस्वामिरामगोपाल:[६०६] कैलाशेन्दु[६०७]शिरोमणि:[६०८]॥१३८॥

हल्दीकर आबाशास्त्री[६०९] परमेश्वरमैथिल:[६१०]।
[६११]नारायणरामब्रह्मौ [६१२]ताराचरणतार्किक:[६१३]॥१३९॥

[६१४]राधाकृष्णोऽथ मिश्रश्च राममिश्रोऽष्टपुत्रक:[६१५]।
[६१६]सरयूशीतलौ [६१७]नन्दकुमारो [६१८]दासमाधव:[६१९]॥१४०॥

महावीरप्रसादोऽसौ[६२०] द्विवेदी बलदेवक:[६२१]।
[६२२]सरोजमोहिनी देवी सोऽन्नदाचरण:[६२३] कवि:॥१४१॥

रामशास्त्री[६२४] च तैलङ्गो राजा सुरेन्द्रमोहनः[६२५]।
[६२६]व्रजनाथहृषीकेशौ [६२७]मुडुम्बिनरसिंहकः[६२८]॥१४२॥

कविस्सम्पत्कुमाराख्यो[६२९] [६३०]नरसिंहोऽप्यशास्त्रिभाक्[६३१]।
बोम्यकान्तिर्नरसिंहो महेशस्तर्कसन्मणिः[६३४]॥१४३॥

[६३५]ताताचार्यश्च लिङ्गेशो[६३६] मनुजेन्द्रश्च दत्तभाक्[६३७]।
उपेन्द्रनाथसेनश्च[६३८] शास्त्री च टी. गणपतिः[६३९]॥१४४॥

वर्मा स राजराजश्च[६४०] शेषशायी[६४१] नरोत्तमः[६४२]।
शर्मा [६४३]चिन्तामणिस्तर्करत्नभाग् यादवेश्वरः[६४४]॥१४५॥

श्रीचित्रधरशर्मा[६४५] च तम्बुराटी मनोरमा[६४६]।
कुप्पूस्वामी[६४७] कुच्चुवीरः[६४८] केरल[६४९]वर्मशक्तनः[६५०]॥१४६॥

शताब्द्यामेकोनविश्यां पराधीने च भारते।
सर्वेऽप्येते सुकवयो राष्ट्रजागरणं दधुः॥१४७॥

[६५१]शिवरामशशम्भुकविः[६५२] विक्रमो[६५३] विठ्ठलेश्वरः[६५४]।
वर्धमान[६५५]कविर्वत्सभट्टि[६५६]र्लल्लाख्य[६५७]दीक्षितः॥१४८॥

रविषेणो[६५८] रम्यदेवो[६५९] राजनाथश्च[६६०] डिण्डिमः[६६१]।
यशः[६६२] पालयशश्चन्द्रौ[६६३] मानतुङ्गश्च[६६४] मारुला[६६५]॥१४९॥

[६६६]दण्डिमेधाविरुद्राख्यौ[६६७] [६६८]भामहाल[६६९]करुद्रटाः[६७०]।
[६७१]भट्टनायकमुकुल[६७२]कुन्तको[६७३]द्भट[६७४]मम्मटाः[६७५]॥१५०॥

रुय्यको[६७६] मल्लिनाथश्च[६७७] कविर्भरतमल्लिकः[६७८]।
दीक्षितो मणिरामश्च[६७९] मधुसूदन्[६८०]सरस्वती॥१५१॥

भानुदत्तो[६८१] भानुभट्टो[६८२] [६८३]भानुर्भानुकरः कविः[६८४]।
ख्यातः पुलिन्दभट्टश्च[६८५] नीलकण्ठचतुर्धरः[६८६]॥१५२॥

नन्दनश्चैव[६८७] नारोजी[६८८] जोनराजश्च[६८९] जम्भल:[६९०]।
[६९१]जम्बूकविर्जयन्तश्च[६९२] चोक्क[६९३]नाथश्चतुर्भुज:[६९४]॥१५३॥

[६९५]चाण्डूचिन्ता[६९६]मणिश्चण्डी[६९७]दासश्चारित्र्यवर्धन:[६९८]।
[६९९]चिक्कदेवश्चक्र[७००]कविर्गणिश्चारित्रसुन्दर:[७०१]॥१५४॥

ग्रहिलो[७०२] गौडपादश्च[७०३] कविर्गुणविजयो [७०४]गणि:।
कूरनारायण:[७०५] कृष्णानन्द:[७०६] क्षेमकरो मुनि:[७०७]॥१५५॥

कृष्णवल्लभभट्टश्च[७०८] कैयट:[७०९] कृष्णपण्डित:[७१०]।
[७११]कवीन्द्रकाञ्चनाचार्यौ [७१२]ख्यातौ [७१३]सायणमाधवौ[७१४]॥१५६॥

स्मर्यन्ते साम्प्रतं नव्या: कवयस्सादरं मया।
नाट्यकारा: कथाकारा गीतकारा: समीक्षका:॥१५७॥

भट्टोऽसौ [७१५]मथुरानाथोऽप्यप्पाराशिवडेकर:।
[७१६]शर्मा गिरिधरो [७१७]रामावतारो राजवल्लभ:[७१८]॥१५८॥

जानकीवल्लभश्शास्त्री[७१९] राजराजश्च[७२०] श्रीवर:[७२१]।
[७२२]मेधाव्रतो विश्वनाथ[७२३]स्तिरुमल्बुक्कपट्टनम्[७२४]॥१५९॥

पण्डिताऽसौ क्षमाराव:[७२५] पूर्णप्रसादब्राह्मण:[७२६]।
[७२७]पाठकश्श्रीधरो रामसनेहीदास[७२८]-भैरवौ[७२९]॥१६०॥

स्वामी भगवदाचार्य:[७३०] आर्हतो ज्ञानसागर:[७३१]।
वेङ्कट्राम[७३२]जयराम[७३३]नागराज[७३४]सुधाकरा:[७३५]॥१६१॥

विष्णुदत्त:[७३६] प्रभुदत्तो[७३७] जग्गूबकुलभूषण:[७३८]।
[७३९]सूर्यनारायणश्छत्रे विश्वनाथोऽथ केशव:[७४०]॥१६२॥

उमापतिद्विवेदश्च[७४१] काशीनाथश्च[७४२] लक्ष्मण:[७४३]।
कालीपद:[७४४] कृष्णमूर्ति:[७४५] राघवो [७४६]रामबालक:[७४७]॥१६३॥

श्रीधरो भास्करः[७४८] शास्त्री छज्जूरामः[७४९] परीक्षितः[७५०]।
विन्ध्येश्वरीप्रसादश्च[७५१] मालवो रामसेवकः[७५२]॥१६४॥

माधवहरिरणेऽसौ[७५३] बालरामपणिक्करः[७५४]।
द्विजेन्द्रो वसवराजः[७५५] शिवगोविन्द[७५६]सत्कविः॥१६५॥

कृष्णप्रसादोधिमिरे[७५७] चन्द्रभानु[७५८]र्दिगम्बरः[७५९]।
शास्त्री सत्यव्रतः[७६०] पद्मः[७६१] मुल्लपूडिनरायणः[७६२]॥१६६॥

गोस्वामिबलभद्रश्च[७६३] पिल्लै नारायणस्ततः[७६४]।
शर्मा त्र्यम्बकभण्डारकरो[७६५] रामकिशोरकः[७६६]॥१६७॥

मिश्रस्साधुशरणश्च[७६७] शर्माप्युमाशङ्करः[७६८]।
[७६९]पन्तस्सुबोधचन्द्रश्च के एन. एलुतच्छनः[७७०]॥१६८॥

जोशी रसिकविहारी[७७१] वनमाली[७७२] सनातनः[७७३]।
रमेशचन्द्रशुक्लश्च[७७४] ब्रह्मानन्दः[७७५] पशुपतिः[७७६]॥१६९॥

रघुनाथचतुर्वेदी[७७७] वसन्तस्त्र्य[७७८]म्बशेवडे।
श्रीवासुदेवकृष्णश्च[७७९] श्रीनिवासरथोऽपि च[७८०]॥१७०॥

मिश्रोऽभिराजराजेन्द्रः[७८१] परङ्गी मल्लिकार्जुनः[७८२]।
अर्कस्स सोमयाजी[७८३] च करनादिस्स बिट्ठलः[७८४]॥१७१॥

गुलाबचन्द्रचूलेटः[७८५] स श्रीनिवासराघवः[७८६]।
देवराज[७८७]सदानन्दशिव[७८८]दत्ताऽ[७८९]रविन्दकाः[७९०]॥१७२॥

[७९१]अमीरचन्द्रश्रीरामौ[७९२] बालकृष्णगजाननः[७९३]।
[७९४]इन्द्रदेवश्च ढक्कालवेणीमाधवमाध्रवौ[७९५]॥१७३॥

[७९६]ब्रह्मदत्तरामा[७९७]शीषभीमकान्त[७९८]-प्रियव्रताः[७९९]।
हरिनारायणो[८००] भारद्वाजशिव[८०१]प्रसादकः॥१७४॥

जयनारायणो[८०२] यात्री रामभद्रो जगद्गुरुः[८०३]।
[८०४]श्रीश्वरशिशवरामश्च[८०५] गुहस्त्रैलोक्यमोहनः[८०६]॥१७५॥

अन्नदाचरणो[८०७] हर्षप्रकाशो[८०८] यादवेश्वरः[८०९]।
रविवर्मा तम्बुरानः[८१०] [८११]नाणुमार्तण्ड[८१२]लक्ष्मणाः[८१३]॥१७६॥

उर्वीदत्तो[८१४] रमानाथो[८१५] रामशास्त्री[८१६] वनेश्वरः[८१७]।
वैद्यनारायणः[८१८] पिल्ले नृसिंहश्च[८१९] पुणेकरः॥१७७॥

ईश्वरचन्द्रः[८२०] कल्याणी[८२१] खिस्ते नारायणाभिधः[८२२]।
ताता[८२३]चार्योऽथ शैलश्च[८२४] ज्वालारामश्च[८२५] नागरः॥१७८॥

[८२६]सुन्दरेशमहालिङ्गौ[८२७] पिल्लैगोपाल[८२८]-कोऽनिलः[८२९]।
दत्तदीनेश[८३०]-चन्द्रश्च शास्त्री तैलङ्गलक्ष्मणः[८३१]॥१७९॥

यतीन्द्रविमलो[८३२] रामकरणः[८३३] परमेश्वरः[८३४]।
प्रणयी रामनाथश्च[८३५] प्रभातः[८३६] रामचन्द्रडुः[८३७]॥१८०॥

श्रीभाष्यं[८३८] हनुमन्तश्च[८३९] कृष्ण[८४०]-लालोऽरुणोदयः[८४१]।
[८४२]मुनिर्नथमलो बाबू[८४३]रामोऽवस्थी च भास्करः[८४४]॥१८१॥

[८४५]पुष्पा वेदकुमारी[८४६] च वनमाला[८४७] नवालता[८४८]।
[८४९]नलिनी वीणापाणिश्च[८५०] कवयित्र्यो विशारदाः॥१८२॥

[८५१]हरीराम[८५२]कलानाथराधावल्लभ[८५३]माधवाः[८५४]।
विन्ध्येश्वरीरमाकान्तमणिप्रणवकेशवाः[८५९]॥१८३॥

शर्माशिवशरणश्च[८६०] वीरभद्रोऽथ[८६१] भास्करः[८६२]।
कृष्ण[८६३]लालकृपारामौ[८६४] जगन्नाथ[८६५]-प्रियव्रतौ[८६६]॥१८४॥

सुभाषो[८६७] हरिदत्तश्च[८६८] प्रभुनाथ[८६९]प्रशस्यकौ[८७०]।
[८७१]शिवजी रुद्रदेवश्च[८७२] दुर्गादत्तोऽथ[८७३] केशवः[८७४]॥१८५॥

विघ्नेश्वर[८७५]-जगन्नाथौ[८७६] देवदत्तश्च[८७७] दीपकः[८७८]।
[८७९]राजन्नशास्त्रिभूपेन्द्रौ[८८०] विट्ठलदेवुनिसुन्दरः[८८१]॥१८६॥

[८८२]वेलङ्करसीतानाथौ[८८३] वीरेन्द्रो[८८४] व्योमशेखरः[८८५]।
पाण्डे गोविन्दचन्द्र[८८६]श्चाऽप्युमा[८८७]कान्तेन्द्रमोहनौ[८८८]॥१८७॥

शङ्करदेवोऽवतरे[८८९] रामकृष्णोऽव्ययंस्तथा[८९०]।
[८९१]सुन्दरराजोऽम्बिकादत्त[८९२]परमानन्दशास्त्रिणौ[८९३]॥१८८॥

खिस्ते बटुकनाथश्च[८९४] शिङ्गरार्यश्च[८९५] जग्गुकः।
[८९६]ओम्प्रकाशो हरिश्चन्द्रो[८९७] गोपीनाथश्च[८९८] टण्डनः॥१८९॥

उपेन्द्रो[८९९] हरिरर्विन्दो[९००] दधिराम[९०१]मरासिनिः।
महराजदीनपाण्डे[९०२] श्रीरामश्चा[९०३]प्यरैयरः॥१९०॥

नारायणवेङ्कट्रमणः[९०४] श्रीनिवासश्च[९०५] पुष्करः[९०६]।
ज्ञानोऽवस्थी बच्चुलालो[९०७] रामाचार्यगलगलिः[९०८]॥१९१॥

सेमवालो जगदीशो[९०९] मिश्रो गिरिजाशङ्करः[९१०]।
आद्याप्रसादमिश्रश्च[९११] मनुदेवश्च[९१२] रामजी[९१३]॥१९२॥

हरेकृष्णश्च[९१४] पीयूषः[९१५] कम्लो[९१६]पेन्द्र[९१७]मनुलताः[९१८]।
[९१९]सम्पूर्णदत्त[९२०]राजेशघनश्यामाः[९२१] सचन्दनाः[९२२]॥१९३॥

कीर्तित्रयी[९२३] कुटुम्बश्च[९२४] वासुदेवश्च पाठकः[९२५]।
शिवदत्तचतुर्वेदो[९२६] रतिनाथश्च[९२७] याज्ञिकः[९२८]॥१९४॥

विश्व[९२९]नारायणोऽशोकः[९३०] पण्ढरीनाथगल्गलिः[९३१]।
[९३२]राघवेन्द्रः पञ्चमुखी रामनाथशिरोमणिः[९३३]॥१९५॥

दीक्षितो [९३४]मथुरानाथो [९३५]जयन्तीलालकाङ्करौ[९३६]।
रमेशचन्द्र[९३७]शुक्लश्च सी. डी. देशमुख[९३८]स्तथा॥१९६॥

रामकृष्णश्च[१३९] सर्राफो गणेशश्शतधानकः[१४०]।
गुल्लपल्लिः [१४१]रामकृष्णो नोदनाथो[१४२] भगीरथः[१४३]॥१९७॥

केशवरामरावश्च[१४४] कपाली[१४५] सन्निधानभाक्।
वसन्तोऽसौ [१४६]गाडगिलो देशपाण्डेप्युमा[१४७] च सा॥१९८॥

ओमप्रकाश[१४८]पाण्डेयो [१४९]धर्मदत्तव्रजेशकौ[१५०]।
पाण्डे मोहनलालश्च[१५१] कमलेशोऽथदत्तकः[१५२]॥१९९॥

[१५३]मिथिलाकाम[१५४]तारामविनयाश्च[१५५] सदाशिवः[१५६]।
[१५७]कोशलेन्द्रप्रवीनौ[१५८] तौ खरवण्डीकरः[१५९] कविः॥२००॥

नानावती स राजेन्द्रो[१६०] गौतमश्च पटेलभाक्[१६१]।
[१६२]रहसविहारीप्रेमनारायणद्विवेदिनौ[१६३]॥२०१॥

सतीशश्च कपूराख्यः[१६४] सतीशचन्द्र[१६५]झॉभिधः।
प्राशरश्चन्दन[१६६]लाल [१६७]उमारानी च सागरः[१६८]॥२०२॥

रामानुजो देवनाथः[१६९] [१७०]कृष्णमूर्तिराजेश्वराः[१७१]।
पौरहा तुलसीदासः[१७२] पण्ड्या रवीन्द्रसंज्ञकः[१७३]॥२०३॥

भारद्वाजोऽथ राजेशो[१७४] राणीमूर्तिस्सदाशिवः[१७५]।
[१७६]लीना सुधाकराचार्यः[१७७] शकटाकीर्तिवल्लभः[१७८]॥२०४॥

[१७९]जयश्रीः बदरीनाथ[१८०]कल्लाऽमियसुधेन्दुकः[१८१]।
स्वामिनाथस्स[१८२] आत्रेयो मसस्स आपटीकरः[१८३]॥२०५॥

पाण्डेयौ च [१८४]रमाकान्तरमेशौ[१८५] स च कैरलः।
मुरलीमाधवः[१८६] सर्वेकवयन्ति मनोरमम्॥२०६॥

मिश्रो राजकुमार[१८७]श्चाप्य[१८८]जयश्च समीक्षकः।
[१८९]बुद्धदेवो हरिद्वारे राधाकान्त[१९०]स्तिरूपतौ॥२०७॥

यथाज्ञातमिदं कृत्वा कविनाम्नां सहस्रकम्।
मिश्रोऽभिराजराजेन्द्रो विश्राम्यति मुदाऽधुना॥२०८॥

एते सरस्वतीपुत्रा वेदादारभ्य साम्प्रतम्।
यावल्लोकेषु विख्याताः सारस्वततपोरताः॥२०९॥

दुरितानि विनङ्क्ष्यन्ति तेषां नामानुकीर्तनैः।
पुण्योदयश्च भविता पाठमात्रेण नित्यशः॥२१०॥

कवयश्शारदापुत्राः शारदा चैव संसृतिः।
वाङ्मयीं मूर्तिमाश्रित्य स्थिता सा परमेश्वरी॥२११॥

ब्रह्मब्रह्मखनेत्राब्दे शनौ जूनेऽह्नि तुर्यके।
ख्रैस्ते चतुर्भिर्दिवसैस्सहस्रनामपूरितम्॥२१२॥

अग्रजाय रमाकान्तशुक्लवर्याय दीयते।
प्रकाशनार्थमध्यर्वाचीनसंस्कृतपत्रिकम्॥२१३॥

॥इति त्रिवेणीकविनाऽभिराजराजेन्द्रेण विरचितं॥
कविसहस्रनामशतकं समाप्तम्

सनराइज़ विला
लोअर समर हिल शिमला-१७१००५
शनिवार ( ०४.०६.२०११ )

---

टिप्पण्यः -

१. वैदिक ऋषिः, २. चन्द्रदत्तात्रेयदुर्वाससां पिताऽनसूयापतिः, ३ ऋषिः शकुन्तलापालकः, ४. सूर्यवंशपुरोहितो ब्रह्मर्षिः, शक्तेर्जनकोऽरुन्धतीजानिः, ५. औचथ्यो बृहस्पतेरग्रजः, ६. देवहूतिजानिः, कपिलस्य पिता, ७. दाक्षीपुत्रः शालातुरीयोऽष्टाध्यायीकारः जाम्बवतीविजयमहाकाव्यकर्ता च, ८. लक्षश्लोकात्मकसंग्रहग्रंथस्य प्रणेता व्याडिः पाणिनेर्मातुल इति श्रुतिः, ९. नाट्यशास्त्रकृता भरतेन स्मृतः कोऽपि रंगाचार्यः, १०. पूर्वभरतयुगीनः नाट्यशास्त्री। राजशेखरेण रससम्प्रदायस्याऽद्याचार्यरूपेण स्मृतः। ११. ई.पू. चतुर्थशतकोत्पन्नः, नाट्यशास्त्रकारः, १२. महाभाष्योल्लिखिताऽऽख्यायिका, १३. तत्रैवोल्लिखिताऽऽख्यायिका, १४. तत्रैवोल्लिखितं नाटकम्, १५. भामहेन काव्यालंकारे उल्लिखितम्,

१६. वासवदत्ताकथाकारः ( ६००ई. ), १७. दशकुमारचरित-अवन्तिसुन्दरीकथा-काव्यादर्शकारः ( ६५० ई. ), १८. हर्षचरितकादम्बरीचण्डीशतकादिकर्ता हर्षदेवराजकविः ( सप्तमशतकीयः ई. ), १९. बाणभट्टेन प्रशंसितो गद्यकारः, २०. उदयसुन्दरीकथाकारः, २१. वेमभूपालचरितकारः, २२. मुञ्जमहीशगोष्ठीकवि-स्तिलकमञ्जरीकारः ( ९७५-२०२२ई. ), २३. भोजप्रबन्धकारः, २४. यात्राप्रबन्ध चम्पूकारः अप्पयदीक्षितशिष्यः ( ई. षोडशशतकोत्पन्नः ), २५. पुरुषपरीक्षादिलेखकः ( १४ शतकीयः ), २६. शिवराजविजयकारः ( १९ शतकीयः ), २७. कथासरित्सागर लेखकः, २८. बृहत्कथाश्लोकसंग्रहकारः, २९. बृहत्कथामञ्जरी-रामायण-भारतीमञ्जरीकारः व्यासदासाऽपरनामा काश्मीरकविः ( १२ शतकीयः ), ३०. पञ्चतन्त्रं मित्रभेदमित्रलाभकाकोलूकीयलब्धप्रणाशापरीक्षितकारकप्रकरणयुक्तम्, ३१. हितोपदेशः सुहृल्लाभसुहृद्भेदसन्धिविग्रहभागयुक्तः, ३२. बृहत्कथायामपि कथा इमास्तिष्ठन्ति, ३३. जम्भलदत्तप्रणीता वेतालपञ्चविंशतिः सर्वथा गद्यात्मिका कृतिः, ३४. उत्तरवाचनिकेयम्, ३५. दक्षिणवाचनिकेयं ग्रन्थस्य, ३६. विस्तृतवाचनिकेयं १२ शतकात्पूर्ववर्तिनी, ३७. जैनकविकृतिरियं १४ ई. शतकोत्तरार्धे कृता, ३८. पञ्चप्रकाशयुक्ता १३०६ ई. शतके प्रणीता, ३९. तिलकसूरिशिष्यो राजशेखरः चतुर्विंशतिप्रबन्धाऽपरनामा ग्रन्थः १३४८ ई. प्रणीतः। ४०. ४१. जैनपरम्परायाः ८९ कथाः पद्यबद्धाः, द्वादशशतकनिर्मितो ग्रन्थः, ४२. वस्तुपालाश्रितो गुर्जरकविः, १२३२ ई., ४३. १६५० ई. शतके प्रणीता, ४४. कृष्णराजाश्रितः कविः ( जन्म १७१५ ई. ), ४५. तिरुमलाचार्यः शैलदीक्षितः ( १८०८-८७ ई. ), ४६. स्याद्वादसिद्धिलेखकः दिगम्बरजैनसाधुः एकादशशतकीयः ई., ४७. १४५२ ई. पूरिता कथा यूसुफजुलेखा- ( फारसी, नूरुद्दीन अब्दुर्रहमानकृता ) संस्कृतरूपान्तरभूता, ४८. १९२६ ई. प्रणीता, ४९. अल्मोड़ाजनपदस्य पटियाग्रामोत्पन्नः १८ ई. शतकोत्तरार्धे, अलंकारकौस्तुभ-कवीन्द्रकण्ठाभरण-रोमावलीशतकार्यासप्त-शत्यादिकर्ता, ५०. मालवेश्वरो भोजदेवोऽपि ( १००५-५५ई. ) पारिजातमञ्जरीं प्रणीतवान्, ५१. रामायणकारो वाल्मीकिः। पौलस्त्यवधाऽपरसंज्ञमादिकाव्यं चकार, ५२. पराशरपुत्रो भगवान् कृष्णद्वैपायनो व्यासोऽष्टादशपुराणानि महाभारतं च प्रणीतवान्। ५३. रघुवंशादिसप्तग्रन्थप्रणेताऽग्निमित्रशकारिविक्रमाश्रितः कविकुलगुरुः। ई. पू. द्वितीयशतकोत्पन्नः, ५४. किरातार्जुनीयमहाकाव्यकारः, ५५. शिशुपालवध महाकाव्यकारः, ५६. रावणवधस्य रचयिता, ५७. नैषधीयचरितकारः जयचन्द्र-राजकविः ( १२ शतकीयः ), ५८. बुद्धचरितसौन्दरनन्दशारिपुत्रप्रकरणकारः कनिष्क- राजकविः ( ७८ई. ), ५९. विक्रमाङ्कदेवचरितमहाकाव्यकारः कविः ( ११ ई. शती ), ६०. सुस्सलजयसिंहसमकालीनो राजतरङ्गिणीकारः, ६१. सोमपालविलास- महाकाव्यं मुग्धोपदेशञ्च कृतवान् ( १२ शतके ई. ), ६२. शंकरवर्मसमकालीनः ( ८८३-९०२ ई. ) भल्लटशतकप्रणेता कविः, ६३. हरविजयाख्यमहाकाव्यकारः कश्मीरे चिप्पटजयापीडाश्रितः ( ७७९-८१३ ई. ) अवन्तिवर्मणोऽपि राज्ये ( ८००-८५०ई. ) कविरयमासीत्, ६४. मातृगुप्तराजकविः

सोमेश्वरपद्मगुप्तरुय्यक- मंखकसोड्ढलस्मृतः राजशेखरप्रशंसितश्च हयग्रीववधररचनाकारः, ६५. काश्मीरनरेशजयसिंहाश्रितः (११२९-५०ई.) श्रीकण्ठचरितमहाकाव्यकारः। ६६. अप्पयदीक्षितभ्रातृव्यशिवलीलार्णव-महाकाव्यकारः ई. सप्तदशशतकोत्पन्नः। कलिविडम्बन-सभारञ्जनशतक-अन्यापदेशशतक-गंगावतरण-नीलकण्ठविजयादि- रचनाकारः, ६७. कुट्टनीमतकारः काश्मीरककविः। जयापीड (७७९-८१३ई.) समकालीनः। ६८. व्यासदास इति क्षेमेन्द्रस्यैव नामान्तरम्, ६९. अभिनवप्रस्थानात्मक- ध्वन्यालोकरचनाकारः अवन्तिवर्माश्रितः (८००-८५० ई.), ७०. कप्फिणाभ्युदयमहाकाव्यकारोऽवन्तिवर्म-सभसामयिकः। पूर्वं शैवः पश्चात् चन्द्रमित्रप्रेरणया बौद्धधर्मे दीक्षितः, ७१. आच्चान् दीक्षितपौत्रः रंगराजाध्वरिपुत्रः १०८ ग्रन्थनिर्माता चित्रमीमांसाकुवलयानन्दादिकृत महान् आचार्यः, सप्तदशशतकोत्पन्नः। ७२. रसगंगाधरकारः शाहजहाँराजकविः, ७३. अमरुकशतककार आनन्दवर्धनादिप्रशंसितः मुक्तककविः, ७४. पवनदूतकारः जयदेवोमापतिधरशरणादिसमकालीनः लक्ष्मणसेनराजकविः (१२ई. शती), ७५. घटकर्परकाव्यप्रणेता। शकारिविक्रमनवरत्नाऽन्यतमः। ७६. १२६८ ई. जन्मतिथिः। १२१ ग्रंथरचनाकारः। संकल्पसूर्योदय-हंससन्देश-पादुकासहस्र-यादवाभ्युदय-रचनाकारः। १३६९ तमे वर्षे मृत्युः। ७७. रत्नखेटदीक्षितसूनुः रुक्मिणी-कल्याणमहाकाव्यकर्ता कविः। सप्तदशशतकीयः। ७८. कलिकाल- सर्वज्ञाऽपरसंज्ञः गुर्जरनरेशकुमारपालोपाध्यायः काव्यानुशासनकुमारपाल- प्रबन्धादिलेखकः, ७९. बीसलदेव (गुर्जरनरेश) राजकविः ११ सर्गात्मक-सुकृतसंकीर्तनकारः, ८० अरिसिंहाऽमरचन्द्रयोः समवेतरचना कवि-कल्पलतेति, ८१. नदियानरेशलक्ष्मण-सेनाश्रितः कविः (द्वादशशतकीयः), ८२. गीतगोविन्दकारः, ८३. बाणभट्टः चण्डीशतककारः, ८४. शिवमहिम्नस्तोत्रकारः, ८५. शैवस्तोत्रकारः काश्मीरकः (१३५०ई.) स्तुतिकुसुमाञ्जलिः (३८ स्तोत्राणि १४२५ श्लोकाः। ८६. आर्यासप्तशतीकारः, लक्ष्मणसेन (द्वादशशतकोत्तरार्धे) राजकविः। ८७. रामचरितमहाकाव्यकारः। गौडीयपालवंशनृपस्य हारवर्षयुवराजस्य (देवपालस्य नवमशतकीयस्य) आश्रितकविः। ८८.सूर्यशतककारः। बाणभट्टस्य श्वसुर इति ख्यातिः, ८९. कृष्णलीलाशुकाऽपरनामा कृष्णकर्णामृतकारः कविः। नीलीदामोदरयोः पुत्रः ईशानदेवशिष्यः भारतीनद्यास्तटे (मलाबारक्षेत्रे) मुक्तिस्थलनिवासी। ९०. नारायणीयकाव्यकारः गुरुवायूरदेवालयकविः (केरले), ९१. मूकपञ्चशतीकारः, मीनाक्षीमन्दिरपरिसरनिवासी १५ शतकोत्पन्नः कविः, ९२. दशमशतकोत्पन्नः तिरुवांकुरनरेशो मुकुन्दमालास्तोत्रकारः। ९३. तंजौरनरेशस्य शाहजीप्रथमस्य (१६८४-१७११ ई.) शासनकाले विद्यमानः त्रयोदशग्रंथकारः (जानकीपरिणयकाव्यम्, शृंगारतिलकभाणः, पतञ्जलिचरितम्) ९४. औरंगजेबप्रपौत्रस्य मुहम्मदशाहस्य चरित्रवर्णनपरं काव्यं अब्दुल्लाचरितम्, तल्लेखकः काव्येऽस्मिन् १६०० अनुष्टुप् श्लोकाः सन्ति। ९५. दशरूपककारो धनञ्जयः मुञ्जराजाश्रितः, ९६. धनञ्जयाऽग्रजः, दशरूपकसय टीकाकारः (अवलोककारः),

९७. तिलकमञ्जरीकारः, ९८. वाक्पतिनामा मुञ्जराजः सिन्धुराजाग्रजः, ९९. परिमलाख्यः पद्मगुप्तो नवसाहसांकचरितकारः, १००. भोजयुगीनो लोककविः, १०१. संग्रहग्रन्थेषु उद्धृतः, १०२. संग्रहग्रन्थेषु उद्धृतः, १०३. कान्यकुब्जाधिपतिमहेन्द्रपालगुरुः बालरामायणकर्पूरमञ्जरीविद्धशालभञ्जिकाकाव्यमीमांसाकारो महाकविः ( १०ई. शती ), १०४. विद्याकरपण्डितः सुभाषितरत्नसन्दोहकारः, १०५. सदुक्तिकर्णामृतकारः, १०६. सुभाषितावलीकारः, १०७. अपरसुभाषितावलीकारः, १०८. सूक्तिमुक्तावलीकारः जल्हणः, १०९. शाङ्र्गधरपद्धतिकारः, ११०. वीरकम्परायपत्नी ( १४ शतके ) गंगादेवी। १११. नयचन्द्रसूरिः हम्मीरकाव्यकारः ( १४००-१४१०ई. ), ११२. काश्मीरककविः जयानकः ११९१-९३ई. मध्ये द्वादशसर्गात्मकं काव्यं प्रणीतवान्। जोनराजाऽस्य ( १४४८ई. ) टीकाकारः, ११३. विज्जाका विजयांका वा पुलकेशिद्वितीयस्य स्नुषा, चन्द्रादित्यभार्या ( ६६०ई. तिथौ स्थिता ) मम्मटमुकुलराजशेखरसमुद्धृता। ११४. सुभाषितावल्यां शाङ्र्गधरपद्धतौ समुद्धृता, ११५. सुभाषितावल्यामुद्धृता, ११६. तत्रैव समुद्धृता, ११७. मधुराविजयकर्त्री गंगा, ११८. तञ्जौरनरपतेः रघुनाथनायकस्याश्रिता ( १७ शतकोत्तरार्धे ) नृपरचितान्ध्ररामायणस्य संस्कृतानुवादिका, ११९. सुभाषितावल्यां संकलिता, १२०. तत्रैवोद्धृता राजशेखर प्रशंसिता च, १२१. उदयपुरराजवंशीया, राणाऽमरसिंहस्य पत्नी, माता च संग्रामसिंहस्य ( १७१०-२६ई. ) वैद्यनाथ-प्रासादप्रशस्तिकर्त्री, १२२. शब्दार्थयोः समो गुम्फः पाञ्चालीरीतिरिष्यते-शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि। भोजदेवः। काश्मीराभिजना। १२३. रघुनाथभूपाज्ञया १७ शतकोत्तरार्धे रघुनाथाभ्युदयकाव्यं ( १२ सर्गाः ) लिलेख, १२४. पार्थस्य मनसि स्थानं लेभे खलु सुभद्रया-कवीनाञ्च वचोवृत्तिचातुर्येण सुभद्रयेति सूक्तिमुक्तावल्यां राजशेखरः, १२५. उल्लेखमात्रं राजशेखरेण, १२६. काश्मीराभिजना सूक्तिमुक्तावल्यां राजशेखरेण प्रशंसिता, १२७. विजयनगरनरेशस्य अच्युतरायस्य ( १५२९-१५४२ई. ) कृपापात्री, वरदाम्बिकापरिणयचम्पूकर्त्री, १२८. विजयांका विज्जाकैव, १२९. अर्थशास्त्रकारः मौर्यवंशस्थापकः, १३०. पाण्डुधृतराष्ट्रयोः भ्राता, हस्तिनापुरसाम्राज्य-महामात्यः, १३१. शतकत्रयकारः वाक्यपदीयलेखकः, १३२. वाङ्मण्डनगुणदूतकारः, १३३. जयपुरनरेशभावसिंहस्य राजकविः, भावविलासकर्ता ( २७ शतकीयः ), १३४. अल्मोड़ावासी उपदेशशतककारः ( १८ शतकीयः ) १३५. पद्मनाभशुभदापुत्रो मैथिलः ( १६६५ ई. ) अन्यापदेशशतककारः, १३६. केरलीयः कविः, १३७. कविरहस्यकारः, राष्ट्रकूटनरेशकृष्णतृतीयराजकविः ( ९४०-५३ ई. ), १३८. रावणार्जुनीयकारः काश्मीरकविः, २७ सर्गात्मकोऽयं ग्रन्थः। १३९. हरिविलासकारः ( १५८३ई. ), १४०. जयरथभ्राता, काश्मीरनरेशराजदेव ( १२०३-२६ ) संरक्षितः। हरचरित-चिन्तामणिकारः, १४१. शिवदासनामा दाक्षिणात्यः कविः, १४२. यादवराघवीयकारः ( ३०० पद्यानि षोडशशतकपूर्वार्धे ), १४३. राघवनैषधीयकारः ( काव्यमाला-५८, १९२६ ई. ), १४४. राघवपाण्डवीयकारः जयन्तीपुरनरपतेः कामदेवस्य

(११८२-८७ सभापण्डितः), १४५. नवमशतकीयः राघवपाण्डवीयकारः। भोजराजशेखरप्रशंसितः, १४६. चिदम्बरस्यैवोपनामेदम्, १४७. विजयनगरेशवेंकट (१५८६-१६१४) सभापण्डितः राघवयादवपाण्डवीयकारः। १४८. १७०३ई. सप्तसन्धानकाव्यकर्ता (ऋषभदेव-शान्तिनाथ-नेमिनाथ-पार्श्वनाथ-महावीर-राम-कृष्णसम्बद्धं काव्यम्) १४९. १६ शतकोत्तरार्धे, त्रिपुरसुन्दरीमानसपूजास्तोत्रकारः, शृंगारामृतलहरीकारः, १५०. सामराजात्मजः शृंगारकलिकात्रिशतीकारः, १५१. कामराजात्मजः षड्ऋतुवर्णनकारः, १५२. नलचम्पूकारः राष्ट्रकूटेन्द्रतृतीयराजकविः दशमशतकीयः, १५३. राष्ट्रकूटकृष्णतृतीयसमसामयिकः नवमशतकीयः, १५४. धर्मशर्माभ्युदयकारादभिन्नः, १५५. गुर्जरकायस्थ-चालुक्यवत्सराजसभाकविः (१०२६-६०ई.), १५६. मालवेश्वरो भोजदेवश्चतुरशीतिरचनाकारः (१००५-५५ई. ) १५७. भारतचम्पूकारः १५ शतके, द्रविडदेशोत्पन्नः, १५८. षोडशशतकमध्यकाले चैतन्यानुगतः, १५९. आन्ध्रस्थवेल्लालकुलोत्पन्नः ११ शतकीयः, १६०. सप्तदशशतकीयः, १६१. नृसिंहचम्पूकार, १५४१ ई., १६२. वीरमित्रोदयकारः ओरछानरेशवीरसिंहदेवाश्रितः (१६०५-२६ई.) १६३. वाराणसेयः पारिजात-हरणचम्पूकारः (१६ शतकीयः), १६४. मत्स्यावतारप्रबन्धकारः (१५७५-१६२५), १६५. चैतन्यशिष्यः मुक्ताचरित्रकारः, १६६. नीलकण्ठविजयचम्पूकारः, १६७. रुक्मिणीपरिणयचम्पूकारः, १६८. रुक्मिणीपरिणयचम्पूकारः, १६९. आनन्दरंगपिल्लै (१७०९-१७६१) चरितात्मकः १७५२ ई. काले कृतोऽयं ग्रंथः, १७०. वीरभद्रदेवचम्पूः प्रणयनकालः १५७८ई.। १७१. हरकेलिनाटककारः ११५० खिस्ताब्दे प्रणीतः। १७२. पारिजातमञ्जरीकारः (नाटिका, त्रयोदशशताकारम्भे प्रणीता), १७३. पार्थपराक्रमव्यायोगकारः परमारनृपतेर्धारावर्षस्य भ्राता प्रह्लादनदेवः (११६३-१२०९ई.) १७४. भीमविक्रमव्यायोगः (१४ खिस्ताब्दे), १७५. तञ्जौरनृपस्य शाहजीप्रथमस्य (१६८४-१७११) राजकविः, त्रयोदशग्रन्थकारः (जानकीपरिणयकाव्यम्, पतञ्जलिचरितकाव्यम्, शृंङ्गारतिलकभाणः, १७६. दानशाहचरित-कीर्तिसमुल्लास-जहाँगीरचरित-खानखानाचरितकारः (१६०९ ई. ), १७७ उन्मतराघवप्रेक्षणककारः (१५ शतके), १७८. वसन्तविलासमहाकाव्यकारः (१२४०ई.), १७९. ज्योतिःप्रभाकल्याणनाटककारः (१४-१५ शतकसन्धौ), १८०. पण्डितराजजगन्नाथस्य पिता, १८१. प्रतारुद्रयशोभूषणकारः, १८२. साहित्यदर्पणकारः (१४ शतके), १८३. जीवनरामदीक्षित इति नाम। कामराजदीक्षितस्य (१६८०-१७२०) पुत्रः। १८४. कलचुरिराजाश्रितः रामाभ्युदय-पाण्डवाभ्युदय-सुभद्रापरिणयनाटककारः (पञ्चदशशतके), १८५. विदग्धमाधव (१५३२ ई.) ललितमाधव (१५३६ई.) दानकेलिकौमुदी (१५४९ई. ) भक्तिरसामृतसिन्धुकारः, १८६. गोपालचम्पूकारः (रूपगोस्वामिभ्रातृव्यः), १८७. रूपगोस्वाम्यग्रजः, १८८. उन्मत्तराघव (अंक) कारः, १८९. अकबरीयकालिदासाऽपरनामा गोविन्दभट्टः, रीवानृपरामचन्द्र (१५५२-९२ई.) समकालीनः। रामचन्द्रयशःप्रशस्तिकारः, १९०. भावनापुरुषोत्तम (प्रतीक)

नाटककारः (षोडशतके), १९१. मदनमञ्जरीमहोत्सवकारः, १९२. वसन्तिकापरिणयकृत्, १९३. राजचूडामणिदीक्षितापरसंज्ञः कमलिनीकलहंसनाटककारः। १९४. सुभद्राधनञ्जय-रत्नेश्वरप्रसादन-मदन गोपालविलासभाणकारः (१७ शतके), १९५. हरगौरीविवाहनाटककारो नेपालनृपः (१७ शतकीयः), १९६. प्रबोधचन्द्रोदयविरोधे ज्ञानसूर्योदयनाटकं चकार १५९१ ई., १९७. रामराज्याभिषेकं वालिपरिणयञ्च नाटकद्वयं कृतवान् (२९ तम शतके) १९८. शृङ्गारदर्पणं जम्बूचरितं च कृतवान् सप्तदशशतके, १९९. बालमार्तण्डविजयकाव्यं कृतवान् १८ तमशतके, २००. रायमल्लाभ्युदयं-पार्श्वनाथचरितं-भविष्यदत्तचरितञ्च (अपूर्णं) कृतवान् षोडशे शतके। २०१. प्रतीकनाटकधर्मविजयकारः १८ तम शतके, २०२. सौभाग्यमहोदयकारः सौराष्ट्राभिजनः, २०३. ययातितरुणनन्दनकारः एकोनविंशशतकीयः। मन्ये आचार्यदिग्विजयचम्पूकाराद् वाधूलगोत्रोत्पन्नवल्लीसहायाद् (१५३९ई.) भिन्न एव, २०४. प्रद्युम्नविजयकारः शंकरदीक्षितः १८ तमशतकीयः, २०५. वैराग्यशतककारः, २०६. ईश्वरशतककारः सप्तदशशतकीयः काश्मीरककविः, २०७. चतुर्विंशतिजिनस्तुतिकारः शोभनमुनिः (धनपालानुजः), २०८. श्रीमहावीरस्वामिस्तोत्रकारः, २०९. जिनशतककारः, १०२५ मितविक्रमाब्दे कृतम्। २१०. सिद्धिप्रियस्तोत्रकारः २११. कल्याणमन्दिरस्तोत्रकारो भक्तामरस्तोत्रकारश्च। विक्रमादित्यकाले उज्जयिन्यामागत इति प्रबन्धचिन्तामणौ, २१२. सुभाषितनीवीकारः त्रयोदशशतकोत्तरार्धे द्रविडदेशोत्पन्नः, २१३. मनोदूतकारः अष्टादशशतकोत्पन्नः, २१४. गदाधरभट्टोऽन्योक्तौ, २१५. दीनाक्रन्दनस्तोत्रकारः, द्वादशशतकोत्तरार्धे काश्मीरे जातः। २१६. पवनदूतकाव्यकारः दिगम्बरजैनः, २१७. दूतीकर्मप्रकाशकारः, चुरहाननरपतिराजकविः, २१८. सहृदयानन्दकारः, साहित्यदर्पणोद्धृतत्वात् तत्पूर्वस्थः कलिङ्गकायस्थः, २१९. पद्मनाभशुभदा-सूनुर्मैथिलोऽन्यापदेशशतककारः, २२०. अप्पयदीक्षितसहोदरः, २२१. अन्यापदेशकारः, २२२. अप्पयवंशोत्पन्नः अन्यापदेशशतकरचनाकारः, २२३. लोकोक्तिमुक्तावलीकारः, वामनोद्धृतत्वात् तत्पूर्ववर्ती, २२४. रामकृष्णविलोमकाव्यकृत् षोडशशतकीयः, २२५. मोहनशर्माऽन्योक्तिकृत् अत्र, २२६. लक्ष्मणमाणिक्यदेवः (अकबरसमकालीनः) कुवलयाश्वचरित-विख्यातविजयकारः, २२७. चन्द्रमाणिक्यदेवः, २२८. विजयमाणिक्यदेवः, २२९. रुद्रमाणिक्यदेवः (सर्वेऽन्योक्तिकाराः), २३०. दुजन्तिर्मधुसूदनो मधुसूदनमैथिल एव २३१. हंसविजयगणी दर्शनविजयगणी च, २३२. अप्रकाशितोऽन्योक्तिकविः, २३३. अप्रकाशितोऽन्योक्तिकविः, २३४. अप्रकाशितोऽन्योक्तिकविः, २३५. कश्मीरनरेशहर्षदेवस्य (१०८८-११००ई.) सभाकविः अन्योक्तिमुक्तालताकारः, २३६. अप्रकाशितोऽन्योक्तिकविः, २३७. राजरत्नाकरमहाकाव्यकारः सप्तदशशतकीयः, २३८. सोमवल्लीयोगानन्दप्रहसनकारः पञ्चदशशतकीयः, २३९. हंससन्देशटीकाकारः, २४०. जनार्दनभट्टः शृङ्गारशतककारः, २४१. द्रविडमुद्गलान्वयिहरिकविपुत्रः अन्योक्तिशतककारः,

२४२. संग्रहग्रन्थे संकलितः, २४३. श्रीधरभट्टसूनुः काव्यभूषणशतककारः ( रचना १७९८ई. ) २४४. संग्रहग्रंथे संकलितः, २४५. सारिकासन्देशकारः अष्टादशशतकीयः, २४६. चण्डीकुचपञ्चाशिकाकारः, वेणीमाधवराधासूनुर्नासिकनिवासी, २४७. नरकासुरविजयव्यायोगकारः कंसवधनाटककारश्च ( षोडशशतके ), २४८. हरिवंशसारचरितकारो गोविन्दमखी ( षोडशशतके ), २४९. अन्योक्तिकविः, २५०. श्रृंगारशतककारः श्रीहर्षोल्लेखात् तत्परवर्ती, २५१. दृष्टान्तकलिकाशतककारः, २५२. अष्टादशग्रन्थकारो नारायणभट्टः, नारायणीयकाव्यकर्ता ( रचना १५९०ई. ), केरलीयः, २५३. श्रृंगारनीतिवैराग्यधनदकारः ( रचना १४३३ ई. ) श्रीमालवासी जैनकविः, २५४. गञ्जीफाखेलनकर्ता, २५५. कौन्तेयवृत्तकारः बंगदेशीयः २५६. अन्योक्तिकविः, २५७. अन्योक्तिकविः, २५८. भामिनीविलासकारः शाहजहान-राजकविः, २५९. शिवमहिम्नस्तोत्रकारः, २६०. शिवताण्डवस्तोत्रकारः, २६१. चर्पटपञ्जरिकादिस्तोत्रकार आदिशंकरः, २६२. रामरक्षास्तोत्रकारः, २६३. मूकपञ्च-शतीकारः मीनाक्षीमन्दिरकविः ( पञ्चदशशतकीयः ) स्तुतिकुसुमाञ्जलिकारश्च जगद्धरः। रत्नधरसूनुः काश्मीराभिजनः ( १३५०ई. ), २६४. मुकुलभट्टशिष्यः उद्भटस्य टीकाकारः ( ९५०ई. ) २६५. रुद्रटटीकाकारः, २६६. हरचरितचिन्तामणिकारः जयरथभ्राता। काश्मीरनरेशराजदेवा ( १२०३-३६ई. )श्रितः कविः, २६७. वेदभाष्यकारः, २६८. वेदभाष्यकारः, २६९. वेदभाष्यकारः, २७०. वेदभाष्यकारः, २७१. निरुक्तकारः ( ई.पू० सप्तमशतके ), २७२. निरुक्तटीकाकारः, २७३. काशिकाकारः, २७४. काशिकाकारः, २७५. माधव ( स्वामिविद्यारण्य ) भ्राता, विजयनगराधीशहरिहरबुक्कसभापण्डितः, २७६. प्रत्यभिज्ञादर्शनोद्भावकः, २७७. शिवस्तोत्रावलीकारः काश्मीरकः ( नवमशतकीयः ), २७८. प्रत्यभिज्ञादर्शनाचार्यः, २७९. प्रत्यभिज्ञादार्शनिकः, २८०. महाभाष्यप्रदीपकारः, २८१. सिद्धान्तकौमुदीकारो वैयाकरणः षोडशशतकीयः, २८२. वैयाकरणभूषणसारकारः, २८३. परिभाषेन्दु-शेखरादिग्रन्थकृत्, २८४. आचार्यदिग्विजयचम्पूकारः ( रचना १५३९ई. ), २८५. जगद्गुरुविजयचम्पूकारः ( मैसूरात् प्रकाशिता ), २८६. शंकराचार्यचम्पूकारः, २८७. रामानुजचम्पूकारः ( षोडशशतकान्ते ), २८८. विद्यारण्यसमकालीनः ( १४तम शतके ), २८९. काञ्चीसमीपे समुत्पन्नः सप्तदशशतकीयः। पञ्चग्रन्थकारः, २९०. षोडशतकोत्तरार्धे २९१. षोडशशतकारम्भकाले। माधवचम्पूकारोऽप्ययं कविः, २९२. वारेनहेस्टिंग्जाज्ञया विवादार्णवसेतुं कृतवान्। ततश्च चित्रचम्पूम् ( रचना १७४४ई. ), २९३. विद्यालंकारो बाणेश्वर एव, २९४. त्रयोदशनाट्यकारः ( ई.पू. चतुर्थशतकीयः ), २९५. शूद्रककथाकारः कालिदासपूर्ववर्ती, २९६. शूद्रककथाकारः मालविकाग्निमित्रे कालिदासेनोद्धृतः, २९७. तत्रैवोद्धृतः, २९८. धूर्तविटसंवादकारः ( चतुर्भाणी ), २९९. पादताडितककारः काश्मीरकः ( ८००-९००ई. मध्ये ), ३००. भगवदज्जुकीयकारः, ३०१. मृच्छकटिकप्रकरणकारः ई. द्वितीयशतकीयः, ३०२. कनिष्कराजकविः ( ई.७८ ) बुद्धचरित-सौन्दरनन्द-शारिपुत्रप्रकरणकारः, ३०३. ई. पू. तृतीयशतके। महाभाष्योक्तकण्ठाभरणकाव्यकारः, ३०४. उत्तररामचरित-

महावीरचरितमालतीमाधवकारः, ३०५. अनर्घराघवनाटककारः, ३०६. मायुराजोपाधिः, ३०७. मायुराट् अर्थात् मातृराजः (माउराज इति राजशेखरः) नरेन्द्रवर्धनसूनुः अनङ्गहर्षाऽपरनामकः कलचुरिनृपतिः। तापसवत्सराजोदात्त-राघवनाटककारः। आनन्दवर्धनोद्धृतत्वात् तत्पूर्ववर्ती। ३०८. मुद्राराक्षसकारः, ३०९. दूतांगदकारः। कुमारपालयात्रावसरेऽभिनीतमिदं नाटकम् १२४३ई. तिथौ। छायानाटकमिदम्, ३१०. वेणीसंहारकारः, ३११. पीयूर्षवर्षाऽपरसंज्ञः। साहित्यदर्पणोद्धृतत्वात् तत्पूर्ववर्ती। ३१२. बालरामायण-बालभारत- विद्धशाल-भञ्जिका-काव्यमीमांसाकारः महेन्द्रपालराजगुरुः (दशमशतकीयः), ३१३. आद्यशंकराचार्यशिष्यः केरलकविः, ३१४. षोडशशतकीयः दाक्षिणात्यकविः, ३१५. प्रबोधचन्द्रोदयकारः चन्देलवंशीयकीर्तिवर्मसमकालीनः, १०९३ई., ३१६. कान्यकुब्जनृपमहीपालसभाकविः। नैषधानन्दनाटकमपि कृतवान्। राजशेखर-समकालीनः, ३१७. आचार्यहेमचन्द्रशिष्यः। सिद्धराजजयसिंह-कुमारपाल समकालीनः (११३०-८०ई.) शतप्रबन्धकर्ता, ३१८. पार्वतीपरिणयनाटक-शृंगारभूषणभाणकारः (१४२०ई.), ३१९. केरले महोदयसाम्राज्याधिपतिः (८९५-९५५ई.) तपतीसंवरण-सुभद्राधनञ्जयनाटककारः। ३२०. केरलीय-कोलम्बरपुरनरेशः (त्रयोदशशतकोत्तरार्धे) परमवैष्णवः, ३२१. वीरधवलस्य तन्मन्त्रिणो वस्तुपालस्य च प्ररोचनापरं नाटकम् (रचना १२२५ई.), ३२२. पाण्ड्यनरेशकुलशेखरमारवर्मराजकविः (चतुर्दशशतकीयः), ३२३. साहित्य-दर्पणोद्धृतत्वात् तत्पूर्ववर्त्ययं कविः, ३२४. वञ्चियुवराजः (१७५७-१७८९ई.) सन्तानगोपाल-कार्तवीर्यविजय-वञ्चिमहाराजस्तवचम्पूकारः। ३२५. महानाटककारः, विक्रमसभापण्डितेन मधुसूदनमिश्रेण संग्रथितनाटकम्। नवांकाः ७८८ पद्यानि, ३२६. हनुमन्नाटककारः, १४ अंकाः ५७८ पद्यानि चात्र। उभयोः मूलकर्ता हनुमान्। ३२७. हर्षदेवः कान्यकुब्जनरपतिः (सप्तमशतके), ३२८. परमारनृपस्यार्जुनवर्मणो गुरुर्मदनपालसरस्वती। अर्जुनवर्मैवाऽत्र नायकः, ३२९. गंगातीरस्थकायस्थः पञ्चदशशतकोत्पन्नः, ३३०. साहित्यदर्पणादिकर्ता विश्वनाथश्चतुर्दशशतकीयः, ३३१. हम्मीरकाव्यकर्ता नयचन्द्रसूरिः (पञ्चदशशतकारम्भे), ३३२. मुकुन्ददेवसमकालीनः सप्तदशशतकोत्तरार्धे। अनुपलब्धमिदं सट्टकम्, ३३३. महादेवकाश्योः पुत्रः (१७००-५०ई.) चतुष्षष्टिग्रन्थकारः। महाराष्ट्रचूडामणि कण्ठीरवोपाधिधारी।, ३३४. केरलीयपारशव (वारियर) जात्युत्पन्नः, कालीकटनृपजमोरिनस्य (मानवेदद्वितीयस्य १६५९-६२ई. ) सभापण्डितः। ३३५. मानवेदः कालीकटनरेशस्यैव नाम ३३६. मुद्रितकुमुदचन्द्रकारः। दिगम्बरमुनिकुमुदचन्द्र-श्वेताम्बरमुनिदेवसूर्य-शास्त्रार्थ-विषयकोग्रन्थः (११२४ई.) ३३७. मल्लिकामारुतप्रकरणकारः कालीकटनृप-सभापण्डितः सप्तदशशतकमध्यभागे, ३३८. जयप्रभसूरिशिष्यः (१३ तमशतके ई. ) प्रबुद्धरौहिणेयकारः, ३३९. कौमुदीमित्रानन्दप्रकरणकारो हेमचन्द्रशिष्यः, ३४०. शृंगारतिलकभाणकारः (अय्याभाणः), ३४१. वसन्ततिलकभाणकारः

(अम्माभाणः), ३४२. शारदातिलकभाणकारः, ३४३. शृंगारसर्वस्वभाणकारः (सप्तदशशतकीयः), ३४४. रससदनभाणकारः, ३४५. मुकुन्दानन्दभाणकारः (पञ्चदशशतके), ३४६. मत्तविलासप्रहसनकारः, पल्लवनरेशसिंहविष्णुवर्मणः (५७५-६००ई.) पुत्रः, ३४७. कान्यकुब्जनरेशगोविन्दचन्द्रसभाकविः लटकमेलककारः द्वादशशतके ई., ३४८. कालञ्जरनरेशस्य परमर्दिदेवस्याऽमात्यः (११६३-१२०३ई.) रूपकषट्ककारः, ३४९. अष्टादशे शतके, ३५०. १७०० ई. विरचितम्, ३५१. सप्तदशशतकीयमेव, ३५२. कर्णाटवंशीयमैथिलनरपतेर्हरिसिंहदेवस्य (१२७५-१३२४ई.) राजकविः, दरभंगाजनपदीयपल्लीग्रामवासी। ३५३. प्रबोधचन्द्रोदयकारः ३५४. मोहराजपराजयकारः, गुर्जरनरेशाऽभयदेवस्य (१२२९-३२ई.), कृपापात्रभूतः धनदेवामात्य-रुक्मिणीपुत्रो मोडजातीयो वणिक्, ३५५. संकल्पसूर्योदयकारः त्रयोदशशतकीयः, ३५६. तञ्जौरनरेशस्य शाहजी (१६८४-१७१०) शरभोजीवयोः (१७११-१७२०ई.) प्रधानामात्यः, ३५७. राजशेखरस्य पितामहः, ३५८. रामलिंगामृतकारः (रचना १६०८ई.), ३५९. शान्तिनाथचरितकारः (रचना १२५०ई.), ३६०. रसकल्पद्रुमकारः (रचना १६८९ई. ) औरंगजेबमातुलस्य शाइस्ताखानस्य परितोषार्थं कृतेयं रचना, ३६१. न्यायविनिश्चयकारः, ३६२. सिद्धदूतकारः (रचना १४२७वि.), ३६३. अवधूताख्यो रामयोगी, ३६४. श्रेणिकचरितम् (रचना १३००ई) विविधतीर्थकल्पः (१३२२ई. ) उभयोः प्रणेता, ३६५. शृंगारप्रकाशिकाव्याख्याकारः (१७५०ई.) कन्नडभाषायां गीतगोविन्दटीका, ३६६. जयन्तविजयमहाकाव्यकारः (रचना १२२२ई.), २९ सर्गाः २२०० पद्यानि। ३६७. शहाबुद्दीनराजकविः मम्मटश्रीधरदासोद्धृतः। एकादशशतकात्प्राचीनः। ३६८. धर्मशर्माभ्युदयकाव्यकारः वस्तुपालसमकालीनः (रचना १२३३ई.) संघपतिचरितम् इत्यपि नाम काव्यस्याऽस्य। ३६९. कविराजमार्गकारः (कन्नडभाषायाम् ८२५ई.) काव्यादर्शात्प्रभावितोऽयं ग्रन्थः। ३७०. ईश्वरशतककारोऽवतार एकः। स्तुतिकुसुमाञ्जलिटीकाकर्तुः राजानकरत्नकण्ठस्य पितामहोऽप्यवतारनामा (१६३१ ई.) ३७१. शिशुपालवध-टीकाकारः, ३७२. भारतार्थदीपिकाकारः भारताचार्योपनामा बंगप्रदेशीय-गंगातटवासी (१३५०.१५००ई.) ३७३. अमरुकस्य रसिकसञ्जीवनीटीकाकारः। भोजकुलोत्पन्नः (त्रयोदशशतकोत्तरार्धे) ३७४-३८६. एते सर्वेऽपि सदुक्तिकर्णामृत-शाङ्र्गधरपद्धति- सूक्तिमुक्तावली-सुभाषितावलीप्रभृतिसंग्रहग्रन्थेषु स्फुटरूपेण संकलिताः। समयोऽज्ञातस्तथापि द्वादश-पञ्चदशशतकाभ्यां प्राचीना एव। ३८७. पूर्वाश्रमनाम माधवः। सायणाग्रजः। ३८८ तः ५४४ यावत्परिगणिताः कवयः संग्रहग्रंथेषु संकलिताः। तत्रापि धनददेव-श्रीकण्ठपण्डित-बालकवि-प्रह्लादन-वस्तुपाल- श्रीमदुत्पलदेव-सोमप्रभ-सिद्धसेनदिवाकर-अमृतदत्तानां परिचयो यथा-सन्दर्भं प्राक् प्रदत्तः। तत्राऽनन्तदेवः (३९५) काश्मीरनरेशः (१०२८-६३ई. ) वाक्पतिराजः (३९७) कान्यकुब्जेश्वरयशोवर्मराजकविः गउडवहो (प्राकृत)

महाकाव्यकारः, अष्टम-शतकीयः। रल्हणः ( ४२७ ) संग्रहग्रन्थस्थः, लक्ष्मणसेनः ( ४३३ ) नवद्वीपनरेशः जयदेवाद्याश्रयदाता, मुक्तापीडः ( ४३४ ) काश्मीरनरेशो ललितादित्यः ( अष्टमशतके ) भट्टनायकः ( ४४३ ) रससूत्रव्याख्याकारोऽभिनव-गुप्तपूर्ववर्ती, वामनः ( ४८७ ) रीत्यात्मख्यापकः काश्मीरकाचार्यः प्रसिद्धः अवन्तिवर्मा ( ५०० ) काश्मीरनरेशः नवमशतकीयः वराहमिहिरः ( ५१६ ) वृहज्जातककारः, यशोवर्मा ( ५३० ) वाक्पतिराजभवभूत्याद्याश्रयः कान्यकुब्जेश्वरः, हरिषेणः ( ५३२ ) समुद्रगुप्तप्रयागप्रशस्तिकारः, सोमेन्द्रः ( ५३३ ) क्षेमेन्द्रसूनुः। ५४५ तः ६५० संख्या यावत्परिगणिताः कवयः एकोनविंशशताब्द्यामुत्पन्नाः स्वाधीनतासमरावधौ पत्रपत्रिकासु स्फुटरूपेण प्रकाशिताः। तत्परिचयविषये द्रष्टव्यो ग्रन्थः संस्कृतसाहित्य : बीसवीं शताब्दीति ( आचार्यराधावल्लभत्रिपाठिप्रणीतः ) द्रष्टव्यञ्च मदुपज्ञं विंशशताब्दीसंस्कृतग्रन्थसूचीपत्रमिति। ६५१. नक्षत्रमालारसरत्नहारादिकृत्। परिभाषेन्दुशेखरस्मरणवशान्नागेशादर्वाचीनः। ६५२. अन्योक्तिमुक्तालताकारः। राजेन्द्रकर्णपूरकर्तुः शम्भुकवेरन्यः। ६५३. नेमिदूतकारः ६५४. गीतगोविन्दटीकाकारः ६५५. वरांगचरितमहाकाव्यकारः ( १४शतके ) ६५६. दशपुर ( मन्दसौर ) प्रशस्तिकारः। ६५७. आनन्दमन्दिरस्तोत्रकारः कवीन्द्रवहादुरोपनामकः। रचनाः १८०२ ई.। ६५८. पद्मचरितमहाकाव्यकारः, रचना ई. ६०। ६५९. नलोदयकाव्यकारः ( रचना १६००ई. )। ६६०. अच्युतरायाभ्युदयमहाकाव्यकारः, रचना- षोडश-शतकमध्यभागे। ६६१. डिण्डिमोऽपि राजनाथ एव ६६२. मोहपराजयनाटककारः, ६६३. मुद्रितकुमुदचन्द्रकारः, ६६४. भक्तामरस्तोत्रकारो बाणमयूरयोः समकालिकः, उज्जयिनीवासी। ६६५. काचित्कवयित्री, ६६६. महाकविर्दण्डी काव्यादर्शदशकुमारचरितावन्तिसुन्दरीकथाकारः, ६६७. आचार्यो मेधाविरुद्रो भामहोद्धृतत्वात् तत्पूर्ववर्ती पञ्चमशतकीयः ६६८. काव्यालंकारः ६६९. राजानकोऽलकः हरविजयटीकाकारः ( विषयपदोद्योतिनीति ) द्वादशशतकात्प्राचीनः ६७०. रुद्रटः काव्यालंकारः ६७१. हृदयदर्पणकारोऽभिनवमहिमोद्धृतः, दशमशतकोत्पन्नः ६७२. अभिधावृत्तिमातृकाकारः ६७३. वक्रोक्तिजीवितकारः ६७४. उद्भटालंकारकारः ( काव्यालंकारसारसंग्रहाख्यः ) जयापीडसभापतिर्वामन-समकालीनः ६७५. वाग्देवतावतारो मम्मटः काव्यप्रकाशकारः ६७६. अलंकारसर्वस्वकारः ६७७. बृहत्त्रयीटीकाकारः पञ्चदशशताब्दीयः। ६७८. घटकर्पर-भट्टिकाव्य-नैषधीयचरितटीकाकारः ६७९. श्लोकसंग्रहकारः ( १६०६ पद्यानि ) टोडरमलप्रशंसनादकबरयुगीनः। ६८०.आनन्दमन्दाकिनी-भक्तिरसायनकारः। षोडशशतकीयः। ६८१. रसमञ्जरी-रसतरङ्गिणीकारो मैथिलीगीतगौरीशकारः। षोडशशतके शेरशाहो ( १५४०-४५ ) ल्लेखवशात्। ६८२. हरिकाव्यापरनामधेयः शम्भुराजचरितकारः ( रचना १६८५ई. ) ६८३. भानुकविः स्वाश्रयदातृजल्हणनाम्ना सूक्तिमुक्तावलीं चक्रे। यादवनरेशकृष्णस्य ( १२४७-६०ई. ) करिवाहिनी-पतिर्भंगदत्तो जल्हणः ६८४. भानुकरः भानुदत्तमिश्र एव ६८५. भूषणभट्टाऽपरनामको

बाणभट्टात्मजः कादम्बर्युत्तरार्धपूरकः ६८६. महाभारतस्य भारतभावदीपटीकाकारः (१६५०-१७००ई.) ६८७. प्रसन्नसाहित्यरत्नाकरकारः नन्दनकविः। संग्रहग्रन्थोऽयम् ६८८. सूक्तिमालिकाकारो नारोजीपण्डितः ६८९. द्वितीयराजतरङ्गिणीकारः (९७६ श्लोकाः) पृथ्वीराजविजयटीकाकारः। जैनुलआब्दीन (१४१९-७०) समकालीनः ६९०. गद्यबद्धवेतालपञ्चविंशतिकारः ६९१. चन्द्रदूतकारो धोयीतः प्राचीनः। मणिपतिचरितकारो जम्बूकविः (रचना ९५९ई.) अन्य एव। ६९२. न्यायमञ्जरीकारः ६९३. कान्तिमतीपरिणयनाटक-रसविलासभाणकारः ६९४. भावचिन्तामणि (अमरुकटीका)कारः (१२५०-१६६०ई. मध्ये) ६९५. नैषधीयकाव्यटीकाकारः ६९६. शुकसप्ततिकारः द्वादशशतकात्प्राचीनः ६९७. काव्यप्रकाशस्य दीपिकाटीकाकारः। साहित्यदर्पणकारपितामहस्याऽनुजः। ६९८. शिशुपालवध -नैषधीयचरितटीकाकारः ६९९. गीतगोपालकारः, महीशूरनरपतिः (१६७२-१७०४) ७००. जानकीपरिणयमहाकाव्यम् अष्टसर्गात्मकम् ७०१. शीलदूतकारः सप्तदशशतकीयः ७०२. शिवमहिम्नस्तोत्रकारो ग्रहिलकविरिति प्रबन्ध चिन्तामणिकारः। ७०३. गौडपादाचार्यः आचार्यशंकरपरमगुरुरिति प्रसिद्धिः। ७०४. नलचम्पूटीकाकारः ७०५. सुदर्शनशतककारः ७०६. सहृदयानन्दकारः, जगन्नाथपुरवासी (१३ शतके) ७०७. सिंहासनद्वात्रिंशिकाकारः (१३ शतके) ७०८. काव्यभूषणशतककारः (रचना १७९८ ई.) ७०९. देवीशतकटीकाकारः (रचना ९७७ई.) ७१०. महाराज्ञीस्तोत्रकारः ७११. दशकुमारस्य पद-चन्द्रिकाटीकाकारः (१७ शतके) ७१२. धनञ्जयविजयव्यायोगः (१२ शतके) ७१३. वेदभाष्यकारः ७१४. सायणाग्रजः शंकरदिग्विजयमहाकाव्यकारः ७१५ तः ९९० यावत् परिगणिताः कवयोऽर्वाचीनाः। तेषु केचन स्फुटकाव्यकाराः केचन च प्रबन्धकाराः। तेषां व्यक्तित्व-कर्तृत्वविषये कृपया ग्रन्थद्वयं पश्यन्तु- १. विंशशताब्दीसंस्कृतग्रन्थसूचीपत्रम् (अभिराजराजेन्द्रविरचितम्) २. प्रो. राधावल्लभ-त्रिपाठिप्रणीतं सूचीपत्रं यत्परिवर्धितसंस्करणं सद्य एव प्रकाशितं तिष्ठति संस्थानेन (आधुनिकसंस्कृतसाहित्य-सन्दर्भसूची-प्रधानसम्पादकः आचार्य- राधावल्लभः त्रिपाठी, सम्पादक डा. रमाकान्त शुक्ल आदयः)।

●

# उचितोऽमृतसम्पातः

- ( डा. ) पं. श्रीशशिनाथ झाः
प्राचार्य एवं विभागाध्यक्षः, व्याकरण-विभागः
कामेश्वर-सिंह-दरभंगा-संस्कृत-विश्वविद्यालयः,
कामेश्वरनगरम्, दरभंगा ( बिहारः )- ८४६००८
मो.- ०९१९९४७५९०९

ईश! त्वं शक्तियुतः, तव शरणमहं प्राप्तः।
त्वं जनगणदुःखहरः, विकलोऽहं दुःखार्तः॥१॥

जलपूर-समाप्लावैः, पृथ्वी मग्ना परितः।
संकटे जीवनं हा!! त्रस्ता जीवाः सततम्॥
स्रोतःशोषं कृत्वा त्वं पाहि समायातः।
ईश! त्वं शक्तियुतः, तव शरणमहं प्राप्तः॥२॥

हिमपात-महाशैत्यात्, संसारोऽयं जडवत्।
सततं चिन्ताग्रस्ता, जीवा मरणासन्नाः॥
त्वं प्रखरसूर्यकिरणै, सर्वत्राता ख्यातः।
त्वं जनगणदुःखहरः, विकलोऽहं दुःखार्तः॥३॥

अर्थं कृष्णं बहवो, निक्षिप्य विदेशे हा।
देशे नीतिं ब्रुवते जनतासु पदासीनाः॥
तेषां चित्तं स्वस्थं, कर्तुं समयः प्राप्तः।
त्वं जनगणदुःखहरः, विकलोऽहं दुःखार्तः॥४॥

हिंसानिरता दुष्टा, हृष्टाः पुष्टाः परितः।
आतंकं छद्मयुतं, सम्पाद्याहो!! क्रूराः॥
तेभ्यःसद्बुद्धिं किं, यच्छसि नहि प्रभुतातः।
त्वं जनगणदुःखहरः, विकलोऽहं दुःखार्तः॥५॥

सन्तप्तेयं धरणी, तप्ता जीवाः सकलाः।
त्वं धारासम्पातैः, कुरुषे सर्वान् तृप्तान्॥
मयि सन्तप्ते ननु भोः! उचितोऽमृतसम्पातः।
त्वं जनगणदुःखहरः, विकलोऽहं दुःखार्तः॥६॥

२६.३.२०१२

●

# संस्कृतसमुपासकाः पं. छज्जूरामशास्त्रिणः

- अनिलकुमारः ( शोधच्छात्रः )
श्री.ला.ब.शा.रा.सं.विद्यापीठम्, नव देहली- ११००१६

काव्यशास्त्रविनोदेन कालो गच्छति धीमतामित्यापूरयितुमारब्धा भरतकालात् सम्प्रति यावत्काव्यशास्त्रपरम्परा, यस्यामभवन् भवन्ति भविष्यन्ति चानेक आचार्याः। प्राक्सिद्धान्तानां रक्षणाय स्वमतस्योपस्थापनाय च महतीयं परम्परा नूतनमार्गस्य। सुरभारतीसमुपासकानामिदमस्ति सौभाग्यमाराधयितुं ताम्। अस्यामाराधानायां पं. छज्जूरामशास्त्रिणामभिधानमप्यतीवप्रसिद्धम्। स्वजीवनस्य विषयेऽनेन भणितं दुर्गाभ्युदयनाटके, साहित्यबिन्दौ, विबुध रत्नावल्यां च सम्यक्तया। विद्यते हरियाणाप्रदेशस्य पवित्रकुरुक्षेत्रजनपदे शेखपुरालावला नामको ग्रामः। तत्रात्रिगोत्रसमुद्भवस्य गौडपण्डितहरनाथशर्मणः फकीरचन्द्रबिहारीलालौ द्वौ पुत्रावभवताम्। तयोर्नैवासीत्तस्य बिहारिलालस्य कापि सन्ततिः, फकीरचन्द्रस्य च मोक्षराममनसारामनन्हुरामशिवदत्ता-भिधानाश्चत्वारः पुत्रा अभवन्। सर्वे पुत्राः कृषिकार्ये संलग्नाः पूज्यगोमातृसेवां कुर्वन्तः स्वगृहस्थजीवनं निर्वहन्ति स्म। तेषु मोक्षरामशर्मणो धर्मपत्न्याः श्रीमतीमामकीदेव्याः कुक्ष्याश्चत्वारः पुत्रास्समुद्भूतास्ते च मूलचन्द्रच्छज्जू-रामनेकीरामरामकृष्णाः। छज्जूरामशर्मणो जन्म तत्रैव ग्रामे १९५२ विक्रमाब्देऽभवत्। अष्टवर्षाणि बाल्यक्रीडायां व्यतीत्य यदास्य पितृव्यः पण्डितशिवदत्तशर्मा व्याकरणशास्त्रमधीत्य काश्या गृहं समागतस्तदा नवमे वर्षेऽस्य शिक्षा प्रारब्धा। पं. छज्जूरामशास्त्रिणो ज्येष्ठभ्राता पण्डित मूलचन्द्रशर्मा कर्मकाण्डस्य महान् विद्वानासीत्तस्य साहाय्येनानेन कर्मकाण्डस्य शिक्षा गृहीता। स्वपितृव्याच्छिवदत्तादमरकोषमधीत्य ब्राह्मणोली (बामनौली) ग्रामवास्तव्यानां पण्डितपरमानन्दशास्त्रिणां पार्श्वे लघुसिद्धान्तकौमुदीतर्कसङ्ग्रहौ कण्ठस्थीकृतौ। गागरमलपाठशालायां महाभाष्यशेखरमञ्जूषासिद्धान्तकौमुदीः कण्ठस्थीकृत्य भिवानीनगरे पण्डितसीतारामशास्त्रिणाममनुकम्पया पञ्जाब-प्रान्तीया शास्त्रिपरीक्षोत्तीर्णा। कवित्वविषयेऽस्य प्रतिभा प्राक्तनसंस्कारवशा-देवासीत्। यदाऽयं प्रथममेव जीन्दनगरस्थे सनातनधर्मविद्यालये पाठयितुमारभत तत एव परमात्मविचाराय प्रेत्यानन्तसुखाय चेदं ब्राह्मणस्य शरीरमितिधिया निरन्तरं दुर्गाशिवयोराराधनामारब्धवान्। तयोरेव कृपयानेन षट्शास्त्राणामध्ययना-ध्यापनग्रन्थनिर्माणशक्तिश्चार्जिता। सर्वेषु शास्त्रेषु चैषां समानगतिरासीत्। कतिपयदिवसानन्तरं हृषीकेशवास्तव्येन पं. गंगास्वरूपब्रह्मचारिणा महाभारतकथा

समापनावसरेऽखिलभारतीयविद्वत्सम्मेलनं सफींदोनगरे कृतं यस्मिंश्च बहवो विद्वांसः जगद्गुरुशंकराचार्याश्चागतवन्तः। तस्मिन् बहुसम्मत्या जगद्गुरु शंकराचार्यानुरोधेन सर्वोच्चासनं यद् म.म. गरुडध्वजशास्त्रिणः समलङ्कृतवन्तस्तत्तस्मै प्रदतम्। षड्दर्शनविषयकमस्य व्याख्यानं श्रुत्वा साधुवादपूर्वकं शंकराचार्येण विद्यासागरपदव्या शतं रूप्यकैरुपवस्त्रादिभिः सम्मानितोऽयम्। शास्त्रार्थे शास्त्रिणामतीव रुचिरासीत्, लाहौरप्रभृतिनगरेषु बहून् शास्त्रार्थान् कृत्वा विजयिनोऽभवन्। पित्रोरनुरोधेन सभालीग्रामस्थभिक्षारामशर्मणः पुत्र्या भक्तिदेव्या सहानेन परिणयः कृतः। १९५१ विक्रमाब्दे सपरिवारोऽयं शेखपुरालावलाग्रामात्सम्बन्धं विहाय कुरुक्षेत्रस्थिते रिटोली ग्रामेऽवसत्। तत्रैव भूमिं क्रीत्वानेन भवनस्यैकस्य निर्माणं कृतम्। सर्वे जना राजानमिवैनं सत्कुर्वन्ति, देवमिव च पूजयन्ति स्म। एकस्मिन्नखिलभारतीय- कविसम्मेलने सभापतिमहोदयः शास्त्रिणं प्रति रामायणमहाभारतभागवतसप्तशतीग्रन्थानां विलक्षणं पद्यं कर्तुमनुरोधं कृतवान् तदानेन तत्क्षणमेव ग्रन्थपञ्चकश्लोकानां निर्माणं कृतं यच्छ्रुत्वा सभापतिमहादयेन शास्त्रिणां कृते कविरत्नपदवी प्रदत्ता। अनेनाध्यापिता बहवः संस्कृतच्छात्राः सरस्वतीकृपापात्राण्यभवन्। पञ्जाबविश्वविद्यालय-काशिकक्विंसमहाविद्यालय-प्रयागहिन्दीसाहित्य- सम्मेलनानां संस्कृतपरीक्षाणां चैषः प्रधानपरीक्षकोऽभूत्। अनेकासु विद्वत्सभासु सभापतिपदमप्यलङ्कृतवान्। भाषण-शक्तिरप्यस्याद्भुता एवासीत्। 'आल इण्डिया रेडियो' सञ्चारमाध्यमेन वेदविषयेऽनेकानि भाषणान्यनेन प्रदत्तानि। भारतस्य राष्ट्रपतिनायं राष्ट्रपतिसम्मानेन सम्मानितः। संस्कृतसाहित्य- स्येतिहासस्योपरि वि.सं. २०१७ तमे विश्वविद्याप्रतिष्ठानाद् अनेन महामहोपाध्यायस्योपाधिः प्राप्तः। २०१० वि.सं. तमे वामदेवोपाध्यायस्य प्रेरणयाखिलभारतीय-संस्कृतप्रचारकमण्डलम्प्रति सेवार्थं दिल्लीप्रान्तस्य मुख्यमन्त्रिणा श्रीगुरुमुख-निहालसिंहेन पञ्चशतं रूप्यकाणि पारितोषकरूपेण प्रदत्तानि। छज्जूराम-शास्त्रिणात्मनः परिचयविषये दुर्गाभ्युदयनाटके भणितम्- **''तदयमहमधुना पवित्रकुरुक्षेत्रमध्ये शेखपुरालावलाग्रामजन्मना, रिटोलीग्राम- वासिना, भगवदत्रिगोत्रीयलब्धप्रशंसेन, गौडवंशावतंसेन, पण्डितमोक्षरामतनूजेन, सतीमामकीदेवीगर्भजेन, कर्मकाण्डमहोपाध्याय-पण्डितमूलचन्दानुजेन, पण्डितनेकीरामपण्डितरामकृष्णभट्टाग्रजेन, सम्पादितसकलनित्यक्रियेण, श्रीमतीभक्तिदेवीप्रियेण, विद्यासागरपदालङ्कृतेन, पण्डितछज्जूराम-शास्त्रिणा, कविरत्नेन राजदयोपनत-हृदयोपेत-मुनिनोपश्रावितं,**

**दुर्गाचरित्रमाश्रित्य ग्रथितं दुर्गाभ्युदयं नाम्न नाटकमद्योपतिष्ठे।[१]''** अनेन प्रकारेणैव विबुधरत्नावल्यां संस्कृतसाहित्यस्येतिहासे आत्मनः परिचयसम्बद्धाः कारिकाः प्रस्तुताः –

**'श्री गणेशं प्रणम्यादौ मामकीं नाम मातरम्।**
**कुरुक्षेत्रमध्यवर्ति-रिटोली-ग्रामवासिना।।**
**भारतीयराजधान्यामिन्द्रप्रस्थे प्रवासिना।**
**महामहोपाध्यायेन विद्यासागरशास्त्रिणा।**
**गौडपण्डितवर्येण छज्जूरामेण शर्मणा।।[२]'**

स्वजीवनस्यान्तिमक्षणेषु रक्तदुर्गस्य पार्श्वे बगीचीमाधोदास-नाम्नि स्थाने शिवगौरीमन्दिरेऽयं भगवद्भक्तिरतः सन् देहमत्यजत्। सम्प्रति एतेषां पुत्रवधूः स्वपुत्रेणदीपकेन सह देहल्यां स्थिते नजफगढनगरे वसति।

**कृतयः –**

पं. छज्जूरामशास्त्रिणः साहित्याकाशमण्डलेऽद्भुतप्रतिभायुक्ताः, शास्त्रार्थकुशलाः, काव्यरचनायां निपुणाः, आध्यात्मिकगुणसम्पन्नाः, भारतीयसंस्कृतेः समुपासकाश्चासन्। न च ते केवलं साहित्यशास्त्रमर्मज्ञा अपितु न्यायदर्शनव्याकरणवेदज्योतिषशास्त्रेष्वपि महज्ज्ञानमर्जितवन्तो रचिताश्चैतेन सर्वेषु विषयेषु ग्रन्थाष्टीकाग्रन्थाश्च। आधुनिक संस्कृतकाव्यशास्त्रकारेण डा. आनन्दकुमारश्रीवास्तवेन पं. छज्जूरामशास्त्रिणां ग्रन्थानां विषये उल्लिखितम् तत्र च सुल्तानचरितम्, दुर्गाभ्युदयनाटकम्, छज्जूरामायणम्, कुरुक्षेत्रमाहात्म्यम्, कर्मकाण्डपद्धतिः, साहित्यबिन्दुः, विबुधरत्नावली, परशुरामदिग्विजयम्, प्रत्यक्षज्यौतिषम् इति मूलग्रन्था निर्दिष्टाः। टीकाग्रन्थेषु मूलचन्द्रिका (न्यायसिद्धान्तमुक्तावल्याः), सरला (न्यायदर्शनस्य), सारबोधिनी (वेदान्तसारस्य), परीक्षा (महाभाष्यस्यादिमद्वयोराह्निकयोः), सारबोधिनी (निरुक्तस्य पञ्चस्वध्यायेषु), साधना (लघुसिद्धान्तकौमुद्याः), परीक्षा विद्यासागरी वा (काव्यप्रकाशस्य इति।[३] डा. व्रजविहारिचौबेमहादयेनान्यौ द्वौ ग्रन्थौ छज्जूशतकत्रयम् (काव्यम्), रसगंगाधरखण्डनमिति च संकेतितौ।[४] डा. रामदत्तशर्मणा स्वग्रन्थे-''संस्कृत साहित्य को हरियाणा का योगदान'' इत्यस्मिन् शिवकथा- मृतमहाकाव्यस्य वर्णनं कुर्वता तत् पं. छज्जूरामशास्त्रिणः स्वीकृतम्।[५] दुर्गाभ्युदयस्य नाटकस्य परिशिष्टे प्राचीनन्यायदर्शनस्य वात्स्यायनभाष्योपरिप्रदीप-टीकायाः सङ्केतोऽपि प्राप्यते।[६] साहित्यबिन्दौ ग्रन्थारम्भात्पूर्वं ग्रन्थकारस्य परिचयो दत्तोऽस्ति तत्र च हिन्दीभाषायां कवितामृत, हिन्दीव्याकरण इत्यनयोग्रन्थयोरप्युल्लेखो वर्तते।[७] श्री ला.ब.शा.रा.सं. विद्यापीठात् निर्गतशोध

पत्रिकायामन्वेषणायां (१) काव्यं साहित्यं च (२) षड्दर्शनपरिचयो द्वौ लेखावपि प्राप्येते।[८] एवं निष्कर्षरूपेण ज्ञायते यत्तेषामधो- लिखिता ग्रन्थास्सन्ति-

**(क) मूलग्रन्थाः** - १. सुल्तानचरितम्, २. दुर्गाभ्युदयनाटकम्, ३. छज्जूरामायणम्, ४. कुरुक्षेत्रमहात्म्यम्, ५. कर्मकाण्डपद्धतिः, ६. साहित्यबिन्दुः, ७. विबुधरत्नावली, ८. परशुरामदिग्विजयम्, ९. प्रत्यक्षज्योतिषम्, १०. छज्जूरामशतकत्रयम्, ११. रसगंगाधरखण्डनम्, १२. शिवकथामृतं महाकाव्यम्, १३. कवितामृत, १४. हिन्दीव्याकरण, १५. अभिनवहिन्दी-संस्कृतकोषः, १६. योगमञ्जरी।

**(ख) टीकाग्रन्थाः** - १. मूलचन्द्रिका (न्यायसिद्धान्तमुक्तावली), २. सरला (न्यायदर्शनम्), ३. सारबोधिनी (वेदान्तसारः), ४. परीक्षा (महाभाष्यम्) ५. सारबोधिनी (निरुक्तम्), ६. साधना (लघुसिद्धान्तकौमुदी), ७. परीक्षा विद्यासागरी वा (काव्यप्रकाशः), ८. प्रदीपः (प्राचीन न्याये वात्स्यायनभाष्यम्)।

**(ग) शोधपत्रिकायां लेखः** - अन्वेषण (१. काव्यं साहित्यं च, २. षड्दर्शनपरिचयः)।

एवमाचार्यच्छज्जूरामशास्त्रिणा सर्वेषु विषयेषु अप्रतिमप्रतिभाया माध्यमेनाद्भुतयोगदानम् आधुनिकसंस्कृतपरम्परायां कृतम्। नूनमेव संस्कृतानुरागिणां कृते ते प्रेरणादायकाः, संस्कृतिम्प्रति उद्बोधकाः, यूनां नूतनदृष्टिप्रदायकाश्च सन्ति। एतादृशानामादर्शभूतानां विषये एवेदमुच्यते-

**''जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।**
**नास्ति येषां यशः काये जरामरजं भयम्॥''**

इति शम्।

---

**टिप्पणीः** -

१. दुर्गा. पृ.सं. २-३
२. विबु. १/१, २, ३
३. आ. सं. का. पृ. ५४
४. आ. सं. का. पृ. ५४
५. सं. सा. को हरि का यो. पृ. सं. ९०
६. दुर्गा. ग्रन्थकारपरिचयः पृ. सं. ५
७. सा. बि. ग्रन्थकार परिचयः पृ. सं. ६
८. सन् १९७७-७८ पृ. सं. १०८-१४८

# संस्कृतसेवी आचार्यबाबूराम अवस्थी

-डा. रमाकान्त शुक्ल:

स्व. आचार्यबाबूरामोऽवस्थी लखीमपुरखीरी-नगरे जनिं लेभे। तस्य पितामहः श्रीसूर्यप्रसादोऽवस्थी योऽग्रे गत्वा श्रीसूर्यनारायणोऽथवा 'ब्रह्मचारीजी' त्याख्यां लेभे, परमतपस्वी आसीत्। तस्य ज्येष्ठपुत्रः श्री रामावतारोऽवस्थी आसीत् यस्य धर्मपत्न्यां श्रीमत्यां छोटकीदेव्यां २०.२. १९२९ तमे दिनांके तदनुसारं १९८५ तमे वैक्रमेऽब्दे मार्गशीर्ष शुक्लषष्ठ्यां पुत्ररत्नं जनिं लेभे। अयमेव पुत्रः श्रीबाबूरामोऽवस्थीतिनाम्ना ख्यातोऽभूत्। श्रीमतो बाबूरामावस्थिनः धर्मपत्न्या नाम श्रीमती उर्मिला अवस्थी अस्ति। श्रीमतोऽवस्थिमहाभागस्य उच्चशिक्षागुरुः डा. बच्चूलालोऽवस्थी 'ज्ञानम्' आसीत्। श्रीमता अवस्थिमहाभागेन सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः 'साहित्याचार्य' परीक्षा आगराविश्वविद्यालयतः संस्कृत एम.ए. परीक्षा च प्रथमश्रेण्यामुत्तीर्णे। विविधसंस्थाभिः श्रीमते अवस्थिने 'संस्कृतश्रीः', 'साहित्यश्रीः', 'कविरत्नम्', 'साहित्यमहोपाध्यायः' इत्येते उपाधयः समर्पिताः।

श्रीमताचार्यावस्थिना इमे ग्रन्थाः प्रणीताः - १. सरलसंस्कृतसम्भाषणम्, २. सरलसंस्कृतनिबन्धावली, ३. युगदर्शनम्, ४. गीत-गङ्गा, ५. लोकगीताञ्जलिः, ६. नाट्यनीराजनम्, ७. नाट्यनवनीतम्, ८. कथा-द्वादशी, ९. लेखलतिका, १०. मानस-वीचि-विलास, ११. ललितलेखमाला च। अप्रकाशितासु कृतिषु 'सुविचार-सुधा', 'काकली-कुंज', 'वाग्वल्लरी' च प्रमुखाः सन्ति। 'काव्यप्रकाशदर्शिका' नाम टीकाग्रन्थोऽपि तेन लिखितः।

संस्कृतकविसम्मेलनेषु अवस्थिमहाभागः सञ्चालकत्वेन उपतिष्ठते स्म पद्यमयं सञ्चालनं च करोति स्म। विविध-कवि-विषयकानि पद्यानि 'देववाणी-सुवास'स्य द्वितीये भागे सङ्कलितानि सन्ति। मयि अवस्थि-महाभागस्य अनन्यः स्नेह आसीत्। बहुधा आवयोः सम्मेलनं उ.प्र. संस्कृत-संस्थानेन (उ.प्र.सं.अकादम्या) समायोजितेषु संस्कृतकविसम्मेलनेषु भवति स्म। २००८तः अवस्थिमहाभागस्य 'अभिनन्दनग्रन्थस्य' प्रकाशनस्य सज्जा प्रवर्तते स्म। मत्सकाशमपि तद्विषये किमपि लेखितुं समायोजकानां पत्रमागतम्। मया २०.५.२००८ तमे दिनाङ्के काश्चन आर्याः प्रणीय ग्रन्थे प्रकाशनार्थं प्रेषिताः। ३१.७.२००९ तमे दिनाङ्के श्रीअवस्थिमहाभागस्य करकमलयोस्तस्य गृहाङ्गण एव 'सुरभारती-सपर्या-कुसुमाञ्जलि'रिति शीर्षको

अभिनन्दनग्रन्थस्तस्मै समर्पितोऽभूत्। मत्सकाशेऽपि सम्पादिकया श्रीमत्या सुरचना त्रिवेदी-महाभागया ग्रन्थस्यैकं प्रतिरूपं प्रेषितम्। तया पत्रेणाहं सूचितः यत्केषाञ्चिदेव पद्यानां प्रकाशनं तत्र जातम्। शेषाणि पद्यानि 'काकली-कुञ्जे'तिग्रन्थे प्रकाशमेष्यन्ति। २.६.२०१०तमे दिनाङ्के आचार्यबाबूराम अवस्थी यशःशेषतामभजत। इदानीं यावत् 'काकली-कुञ्ज'स्य प्रकाशनं न संवृत्तम्। मयेदमुचितं मतं यत्सर्वासामप्यभिनन्दनार्याणां प्रकाशनमर्वाचीनसंस्कृतस्य प्रस्तुते संयुक्तेऽङ्के क्रियेत। तदनुसृत्य २०.५. २००८ तमे दिनाङ्के प्रणीताः सर्वा अप्यार्या अत्र दीयन्ते। अस्यां रचनायां विद्वद्वन्दना प्रामुख्येन चकास्ति।

## अवस्थी कस्य न वन्द्यः!

### (अवस्थि-सप्तत्रिंशत्)

आचार्यः श्रीबाबूरामोऽवस्थीति विश्रुतो विद्वान्।
अभिनन्द्यते सुहृद्भिर्ज्ञात्वाहं मोदमेमि परम्॥१॥

अभिनन्द्योऽस्ति कवीनामयमाचार्यः कविस्तेषाम्।
मञ्चे येषां प्रस्तुतिरकार्यनेन स्वकृतपद्यैः॥२॥

संस्कृतकविसम्मेलन-सञ्चालननिपुण आचार्यः।
बाबूरामोऽवस्थी जयति बुधानां सभामध्ये॥३॥

अध्यापन-संशोधन-लेखन-वाग्मित्व-संस्कारैः।
बाबूरामोऽवस्थी कस्य न वन्द्योऽस्ति संस्कृतज्ञस्य॥४॥

कविवरमभिरामश्री-बाबूरामं न कोऽभिजानाति।
सरलसरसरचनाभिः सहृदयहृदयानि यो हरति॥५॥

निर्माय कथां रूपकमथ सङ्गीतं निबन्धं वा।
संस्कृतजगदाकाशेऽवस्थी नक्षत्रमिव लसति॥६॥

संस्कृतबोधिन्यस्य, कृतिरास्ते लोकविख्याता।
संस्कृतशिक्षकनामा ग्रन्थोऽथो पञ्चभागेषु॥७॥

बाबूराममवस्थिन-मविरतसुरवाक्प्रचारसंसक्तम्।
वीक्ष्य विपञ्चीवादन-निपुणा हृष्यति गिरां देवी॥८॥
साहित्यं सङ्गीतं कलास्तथा सेवमानेन।
अवस्थिना श्रीबाबू-रामेणाप्तं स्वजन्मसाफल्यम्॥९॥
नवनवरचनावैभव-तोषितसहृदयसमूहाय।
अवस्थिने श्रीबाबू-रामाय समर्पितास्ति मे प्रणतिः॥१०॥
अवस्थिनः श्रीबाबू-रामाज्जाने परं न कञ्चिदहम्।
यो निष्कारणमर्चति निर्जरवाणीं प्रसन्नः सन्॥११॥
आयातु यातु लक्ष्मीः स्तुवन्तु निन्दन्तु नीतिनिपुणा वा।
अवस्थिनः श्रीबाबू-रामस्यास्ते न चित्तविक्षोभः॥१२॥
बाबूरामेऽवस्थिनि गैर्वाणीसाधनालीने।
सर्वं कुशलं नूनं संस्कृतजगतो वरीवर्ति॥१३॥
ऋजुता साधारणता विनयः सन्तोष उच्चचारित्र्यम्।
आशुकवित्वं चास्मिन् विद्वत्श्रेष्ठे प्रसीदन्ति॥१४॥
बाबूरामावस्थिन्! विद्वद्वृन्दारविन्दमार्तण्ड।
त्वं पश्य जीव शृणुयाः ब्रूहि च शरदां शतं विद्वन्॥१५॥
तव जन्मवंशवृद्धिर्भवतु सतां सौख्यदावस्थिन्।
विद्यावंशोन्नतिरपि भवतो भवतात् सुजनसुखदा॥१६॥
अभिनन्दनेन भवतोऽभिनन्द्यते सांस्कृती सेवा।
लखीमपुरखीरीला-क्रोडकृतं तावकं च तपः॥१७॥
अभिनन्दनेन भवतोऽभिनन्द्यते सा परम्पराऽस्माभिः।
त्यक्त्वा सुखमखिलं या सहते कष्टं सुलक्ष्यपूर्त्यर्थम्॥१८॥
समधीत्य भवद्रचना गद्ये रचितास्तथा पद्ये।
हृष्टा भवन्ति नितरां बाला वृद्धा युवानश्च॥१९॥

इदमभिनन्दनमास्ते वाण्या नित्यं सपर्यायाः।
इदमभिनन्दनमास्ते ऋजुताया अथ तपस्यायाः॥२०॥

यस्य गृहे बाला अपि संस्कृतसेवासमर्पिताः सन्ति।
स भवान् बाबूरामोऽवस्थी विद्याव्रती जयतात्॥२१॥

संस्कृतलोकेऽप्यधुना धूर्ताः सुलभाः पदे पदेऽसन्तः।
बाबूरामावस्थिन्! भवादृशा दुर्लभाः सन्तः॥२२॥

भ्रष्टाचारनिमग्ना उत्कोचपराश्चरित्रहीनाश्च।
संस्कृतजगति पिशाचाः सतो जनान् परिबुभूषन्ति॥२३॥

पयोमुखा विषकुम्भा राममुखाः कक्षकौक्षेयाः।
लालाटिका अनेके संस्कृतलोकेऽपि दृश्यन्ते॥२४॥

निरर्थकं ये परहित-घातपरा अपरिभाषेयाः।
तेऽपि सुलभ्याः संस्कृत-लोक इदानीं पदासीनाः॥२५॥

पुरस्कृतेरुचितांशं स्वभागधेयत्वबुद्ध्या ये।
सुरक्षितं कुर्वाणाः सुलभास्ते संस्कृतक्षेत्रे॥२६॥

पदचुम्बनं स्वशिष्यैः कक्षेषु सभासु मार्गे च।
कांक्षन्तोऽपि न तेषां हितावहाः संस्कृतज्ञा अपि॥२७॥

अश्राव्यं यदवाच्यं यच्चाचिन्त्यं तथा च यदकृत्यम्।
तदनुष्ठानपराः किं संस्कृतलोके न दृश्यन्ते॥२८॥

लोकोपकारनिरतास्तपस्विनो वाङ्मनःकायैः।
शिष्यहितं कुर्वाणां अपि नैके संस्कृतक्षेत्रे॥२९॥

संस्कृतज्ञपरिभाषा-भूता एते हि गणनीयाः।
अधीतिबोधाचरणप्रचारलग्नास्तपोनिष्ठाः॥३०॥

एतेष्वपि निजकाव्यैर्लोकहितं साधयन्ति ये नित्यम्।
ते वै जयन्ति कवयो लक्षेष्वेके सुपर्वगिरः॥३१॥

ते वागर्थसहायाः सरस्वतीस्तन्यपरिपुष्टाः।

कवयः सर्वाः सुविधास्त्यक्त्वा लोकं प्रबलयन्ति॥३२॥

येषां यशःशरीरे जरामरणजं भयं नास्ति।

कोटिकोटिजनतायास्ते कवयो वन्द्यतां यान्ति॥३३॥

तेष्वेव हि गणनीयो भवानवस्थिन् कवे विद्वन्।

अभिनन्दनेन भवतः प्रीयन्तां सज्जना लोके॥३४॥

सत्सु प्रतिष्ठितास्ते जगती नोऽसत्सु जृम्भमाणेषु।

वन्द्या नैवासन्तः सन्तः सर्वत्र वन्द्याः स्युः।

(मान्या नैवासन्तः, सन्तः सर्वत्र सम्मान्याः)॥३५॥

सद्वन्दनेन चित्तं भवति पवित्रं जनानां वै।

भवतः सतोऽभिनन्दन-कर्तॄणां स्यान्मनः' पूतम्॥३६॥

'सुरभारती-सपर्या-कुसुमाञ्जलि'-नाम्नि सद्ग्रन्थे।

प्राप्य स्थानमिमा मे मोदन्तां सुरचना आर्याः॥३७॥

- डा. रमाकान्त शुक्लः

(रचना-तिथिः २०/०५/२००८)

●

आचार्यबाबूरामअवस्थी

(२०.२.१९२९-२.६.२०१०)

# श्रावणीपर्व रक्षाबन्धञ्च

- डा. सच्चिदानन्द तिवारी
उपनिदेशकः (मु.)
राष्ट्रिय संस्कृत संस्थानं ५६-५७ इंस्टिट्यूशनल एरिया,
जनकपुरी, नई दिल्ली- ११००५८

विदितमेवात्र भवताम् अस्माकं राष्ट्रं भारतवर्षं जगद्गुरुत्वेन सुदीर्घप्राचीनकालात् प्रसिद्धमास्ते। तत्र भारतीया सुसभ्या वैज्ञानिकी वैदिकी संस्कृतिः कारणत्वं वहति। भारतीयसंस्कृतेः अनेकासु विलक्षणतासु पर्वणां महत्त्वम् उल्लेखनीयं वर्त्तते। वर्षे नैकमपि दिनम् एतादृशं, यत् श्रुतिस्मृत्यनुरोधात् व्यवहाराद्वा पर्वत्वेन प्रतिष्ठितं न भवेत्। अस्यां पर्वणां महत्यां शृङ्खलायां श्रावणीपर्व अतीव विलक्षणं महत्त्वगर्भितञ्च विद्यते। यद्यपि सम्पूर्णोऽयं मास एव मानवमात्रशुभङ्करः पुण्यावहश्च, तथापि मासस्यास्य पूर्णिमातिथिः शिरोमुकुटायमाना वर्त्तते। विष्णुधर्मोत्तरे उक्तमस्ति-

**सम्प्राप्ते श्रावणे मासि पौर्णमास्यां दिनोदये।**
**स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः॥**
**ततोऽपराह्णसमये रक्षापोटलिकां शुभाम्।**
**कारयेदक्षतैस्तद्वत् सिद्धार्थैर्हेमभूषितैः॥**

तथा हि- श्रावणे मासे पौर्णमास्यां तिथौ श्रुतिस्मृतिविधानानुरूपं स्नानं, देवानां पितृणाञ्च तर्पणं, उपाकर्मसंस्कारः हेमाक्षतादिभूषित रक्षापोटलिकाबन्धनञ्च प्रकृतग्रन्थे कर्त्तव्यत्वेन विनिर्दिष्टमास्ते। तत्र धर्मशास्त्रे श्रावणीपर्वसम्बन्धे व्यवस्था कृता विद्यते। श्रावणीपर्व उपाकर्मरूपेणास्माभिः सम्मान्यते। तदुपाकर्मसंस्कारः श्रावण्यां पौर्णमास्यां श्रवणे हस्ते वा कार्यः इति परिप्रश्नः। तत्र उपाक्रियते प्रारभ्यते वेदाध्ययनं येन कर्मणा तदुपाकरणं नाम कर्मविशेषो विद्यासंस्कारः तेनोपाकर्म नाम पक्षद्वयेऽपि स्वाध्याय-रूपवेदपाठारम्भः। अत्र याज्ञवल्क्यः-

**अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा।**
**हस्तेनौषध्यभावे वा पञ्चम्यां श्रावणस्य तु॥**

तत्रेयं व्यवस्था। ऋग्वेदिनः श्रवणे उपाकर्म कुर्युरिति तस्य दिनद्वयव्याप्तौ परदिन एव ग्राह्यम्। मलमासे तु उपाकर्म न कार्यं भवति किन्तु शुद्ध एव। अत्र प्रमाणं तु-

**उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि।**
**अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु।।** इति कात्यायनः।
छन्दोगानां कृते तु मलमास एव उपाकर्म विहितं, न तु शुद्धे।
**दशहरासु नोत्कर्षः चतुर्ष्वपि युगादिषु।**
**उपाकर्ममहाषष्ठ्यौ ह्येतदिष्टं वृषादितः।।**

इति ऋष्यशृङ्गस्मरणात्। यद्यप्यत्र छन्दोगपदं न श्रूयते तथापि **''सिंहे रवौ छन्दोगाः कुर्युरिति''** गार्ग्यवाक्ये तेषां सिंहार्कनियमेन अनुत्कर्षस्य छन्दोगविषयत्वसंभवात्।

**युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्**
इति मनुवचनात् उपाकर्मानन्तरं वेदाभ्यासः कर्त्तव्यो भवति।

श्रावण्युपाकर्मणः मुख्यत्वेन त्रीणि अंगानि भवन्ति, यैः शारीरिकी, मानसिकी, आध्यात्मिकी शुद्धिश्च सम्पाद्यते। तानि च स्नानतर्पण-सूर्योपस्थान-ऋषिपूजन-यज्ञोपवीतधारणादिरूपाणि सन्ति। श्रावणीस्नानं कल्याणाभिलाषिणः पुरुषस्य एकोऽभिषेको विद्यते, येन तस्य शरीरं सर्वथा शुध्यति। अनन्तरं गोमयस्नानं क्रियते। गोमयमिदं घातककीटाणूनां दुर्गन्धीनाञ्च नाशकम्। एतेन स्नानेन वर्षर्तुप्रभावात् जायमानानां गन्धानां दूषितानां निराकरणं स्वास्थ्यञ्च सम्पद्यते। एततस्नानद्वयानन्तरं कुशस्य, दूर्वायाः, अपामार्गस्य च औषधिभिः शिरोमार्जनं क्रियते। एताभिः तिसृभिः औषधिभिः मिश्रितं जलं मूर्ध्नि अभिषिक्तं सत् मस्तिष्काय अपूर्वा शीतलतां प्रददाति। मानसिक्यै शुध्यै च सूर्योपस्थानमनुष्ठीयते। भगवान् सूर्यः अस्माकं मनोबुद्धिसम्प्रेरको विद्यते। वयं ऊर्ध्वबाहवः सन्तः वेदमन्त्रैः प्रार्थयन्तः भगवन्तं सवितारं निर्मलबुद्धिं शिवसंकल्पमनश्च याचामहे। शुक्लयजुर्वेदे उक्तमस्ति **''सूर्य आत्मा जगतस्तत्स्थुषश्च''**। एतदनु ऋषिपूजनं, स्वाध्यायप्रवचनं, यज्ञोपवीतध ारणादिकं कर्म जायते, यस्य साक्षात् सम्बन्धः आत्मना भवति। आस्माकीनाभिः स्मृतिभिः उपाकर्मानन्तरं छन्दसामध्ययनस्य विधानमनुशास्यते। पुराकाले श्रावणी-पूर्णिमा-तिथितः एव ज्ञानमात्रोपलक्षणीभूतस्य वेदस्याध्ययनं जातमासीत्। तदनुरोधात् अद्यतनीये युगेऽपि भारतीयसंस्कृतिसम्पुष्टसंस्थाभिः वेदारम्भस्य प्रारम्भ कालः अयमेव सम्मान्यते। अत एव च भारतसर्वकारेण दिवसोऽयं संस्कृतदिवसरूपेण समुद्घोषितो वर्तते।

अस्माकं स्मृतौ पुराणे च रक्षासूत्रबन्धनस्य अनुशासनम् उल्लेखश्च प्राप्यते। मनुस्मृतौ भगवता मनुनोक्तं विद्यते-

**ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः।**
**कर्त्तव्यो रक्षिकाबन्धो द्विजान् सम्पूज्य शक्तितः॥**

तदेवं ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणाम् अन्येषां च मानवानां कृते रक्षाबन्धनपर्व स्मृतिप्रचोदितं विद्यते। रक्षाबन्धने सूत्रद्वयं भवति, यस्मिन् स्वर्ण-अक्षत-दूर्वा-सर्वौषध्यादियुक्ता एका पोर्टलिका आबद्धा भवति, यस्य बन्धनं कश्चित् वेदज्ञब्राह्मणः करोति। भविष्यपुराणे रक्षासूत्रस्यास्य महत्त्वमुक्तम्-

**अनेन विधिना यस्तु रक्षिकाबन्धनमाचरेत्।**
**स सर्व्वदोषरहितः सुखं संवत्सरं वसेत्॥**
**सर्वरोगोपशमनं सर्वाशुभविनाशनम्।**
**सकृत्कृतेनाब्दमेकं येन रक्षा कृता भवेत्॥**

अर्थात् वर्षे यद्येकवारं रक्षाबन्धनं शास्त्रानुरूपं क्रियते, तदा तेन सर्वेषां रोगाणां शमनं, सर्वेषाम् अशुभानाञ्च विनाशनं भवतीति। वैज्ञानिक दृष्ट्या विचारे कृते सति रक्षापोटलिकायां संरक्षितानि सकलानि वस्तूनि कीटाणुनाशकानि रोगनिरोधकानि च भवन्ति। तेषां करमूले बन्धनात् शरीर संस्पर्शात् शरीरे मनसि च सकारात्मकः प्रभावः स्वास्थ्यकारकः तु भवत्येव।

इतिहासेषु उपाख्यानमेकम् इन्द्रस्य, तस्य पत्न्याः शच्याश्च समुपलभ्यते। कदाचित् देवदानवयोर्मध्ये भीषणमेकं युद्धं सञ्जातमासीत्। तस्मिन् युद्धे देवराजस्येन्द्रस्य दूरतः पराभवं विलोकयन्ती इन्द्रपत्नी शची स्वकीयं स्वामिनमाहूय तस्य करमूले रक्षासूत्रबन्धनमकार्षीत्। तदा तत्प्रभावात् पराभवमुखे पतत इव इन्द्रस्य पराजयस्थाने विजयश्रीः प्राप्ताऽभूत्। एतादृशं अद्भुतं प्रभावं विदन्तो जनाः पश्चादागत्य एतदुपाख्यानमाधारीकृत्य परम्परामेतां प्राचालयन्। परम्परायामस्यां पत्नी स्वस्य पत्युः संरक्षणकामनया समग्रशुभान्वित भावनया च श्रावणीपूर्णिमायां रक्षाबन्धनं करोतिस्म। तदेव रक्षाबन्धनं कालक्रमानुरोधाात् भ्रातृभगिन्योः उत्कृष्टपर्वत्वेन सम्मानितं जातम्। यस्य समायोजनं अद्यतने काले यत्र-तत्र सर्वत्र अस्माभिर्विलोक्यते। रक्षासूत्रबन्धनं एकेन परम्पराप्राप्तमन्त्रेण क्रियते कार्यते च। मन्त्रो विद्यते-

**येन बद्धो बली राजा दानवेन्द्रो महाबलः।**
**तेन त्वां प्रतिबध्नामि रक्षे माचल माचल॥** इति

अत्रेदं रहस्यं दैत्यराजो बली पुराणेषु नितान्तप्रसिद्धो दानवीरः। देवतावतारेषु वामनावतारीभूतो भगवान् विष्णुः राजानं बलिं रक्षासूत्रेणाबध्य

पदत्रयपरिमितस्थानदानाय एतादृशं विवशमकरोत्, यस्मिन् राज्ञो वलेः शरीरमपि समुत्सर्जितम् अभूत्। एतस्मिन् कथानके रक्षासूत्रबन्धनेन राजा वलिः अल्पोऽपि विचलितो नाभूत्, तथैव अस्मिन् मन्त्रे रक्षासूत्रं प्रार्थ्यते यत् राजावलिवत् त्वमपि अविचलिता भवेः। सूत्रस्यास्य नामैव रक्षा। रक्षाबन्धनपर्वणि पुरोहिताः स्वस्य यजमानस्य, भगिन्यश्च भ्रातॄणाम् एतद्बन्धनेन रक्षायै शास्त्रानुमोदितं प्रयासं विदधति। यथा-

**रक्षोघ्नानि विषघ्नाननि यानि धार्याणि भूभुजा।**
**अगदानि समाचक्ष्व तानि धर्म्मभृताम्वर॥**

ऐतिहासिकपर्यालोचनया इदं ज्ञातं भवति यत् क्षत्रियरमण्यः स्वमानमर्यादारक्षायै आवश्यकतायां सत्यां समुपयुक्तक्षत्रियपार्श्वे रक्षिकासूत्रं प्रेष्य बहुधा अयाचन्त। ततश्च तत्सूत्रप्रभावात् सूत्रस्य प्रेषिकायाश्च लज्जा-रक्षणाय ते पुरुषाः प्राणान् अपि तत्यजुः। हिन्दवस्तु हिन्दव एव, यवना अपि रक्षासूत्राह्वाणम् अश्रुतं कर्त्तुं नापारयन्। गुजरातस्य शासको बहादुरशाहः कर्णावत्याः राज्योपरि यदाऽऽक्रमणमकरोत्, तदा तत्रत्या राज्ञी कर्णावती तात्कालिकं शासकं हुमायूं प्रति रक्षासूत्रं प्रेष्य सहायतायै आकारयत्। तदा यवनः सन्नपि हुमायूँः स्वजातीयविरुद्धं युद्धं कृत्वा हिन्दुभगिन्या प्रेषितायाः रक्षायाः सम्मानं ररक्ष।

प्रकारेणानेन श्रावणीपर्व उपाकर्मरूपेण रक्षाबन्धनरूपेण अद्यतने युगेऽपि अस्माभिः समाश्रीयते। अनेन पर्वणा वैयक्तिको विकासः आरोग्यं च जायत एव, सहैव सामाजिकः वैश्विकश्च विकासोऽपि सम्पोष्यते। प्रेम्णः, त्यागस्य, बलिदानस्य आदर्शः पाठश्चानेन पर्वणा अस्मभ्यं प्रदीयते। मन्ये, अत्र समग्रदृष्ट्या स्थितं निगूढतमं रहस्यं सम्यक्तया जानन्तो वयं यदि अनुसरामस्तदा विश्वबन्धुत्वभावना नूनं सम्पुष्टा भवेदिति कल्पते॥

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाग्भवेत्॥**
**"जयतु संस्कृतं जयतु भारतम्"**

•

# अनूदितकवितादूयी

- डा. जयश्री चट्टोपाध्यायः

## तनुः

-विश्वकविरवीन्द्रनाथरचितदेहसंज्ञककवितायाः अयं भावानुवादः

तस्यान्तो नास्ति देहोऽयं येनाऽनन्देन सृज्यते।
तदणुः परमाणुश्च यात आलोकसंगमान्।।
कत्यस्यां मोहमन्त्रान् च प्रक्षिपन्ति सुगन्धिनः।
नृत्यन्ती तनुरेषा मे वीचिच्छन्दः प्रवन्दिता।।
स्तरे स्तरे समालग्ना गीतिकाः कति लीलया।
अयुतवर्णसिक्ता सा निमग्ना रसरंहसा।।
कत्यस्यां दधति स्पर्शान् स्वप्नेन सान्ध्यतारकाः।
राजन्ते कति हर्षाश्च मधुनीता अहेतुकाः।।
युगयुगान्तरस्तन्यमापीय जीवितेह सा।
भुवनानीततीर्थाम्बुपीतपूता सुदक्षिणा।।
सैका मे बान्धवी धन्या समेत्य या ममांगने।
प्रज्वाल्य कति दीपान् मां वृणीते वरमालया।।

## मृगतृष्णा

-विश्वकविरवीन्द्रनाथरचितमानसलोककविताया भावानुवादः

मम मानसकैलासे विजनभुवने सखे।
महेशमन्दिरे चास्मिन् त्वमेव केवलः कविः।।
कर्णादुन्मोच्य वर्हाणि स्नेहाददि्रसुता क्वचित्।
स्मितेन प्रीतिमाप्नोति चूडासज्जां विधायते।।
शंकरचरितं गायन् हरसि हृदयं कवे।
लीलया यासि वा पान्थ यक्षलोकं दुरासदम्।।
लीलापद्मं करे धृत्वा रमन्ते यत्र योषितः।
आधिक्षमा यतस्तन्वी चक्रवाकीव खिद्यते।।
असितनीलकण्ठाभ आषाढजलदे चिरं।
मोदमातनुने यस्या नीलांजनतृषा रतिः।।
क्व गतो विक्रमादिल्यो नवरत्नसभा कुतः।
आविर्भूता कुतश्चेयं कल्पलोकक्षणप्रभा।।
सृष्टिराद्येव धातुः क्व क्व गता विपुलच्छविः।
मानसमृगतृष्णायां भाति छायोपमः कविः।।

●

# 'अर्वाचीनसंस्कृत' पत्रिकायां प्रकाशिताः दिल्लीवर्णनपराः रचनाः

-अविनाशपाण्डेयः
वरीयः शोध-अध्येता
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

## प्रत्ना देहली - (देहल्याः ऐतिहासिकपृष्ठभूमिः)

इन्द्रप्रस्थापरपर्यायदेहलीनगरं प्राचीनं कालजयि राजनीतिकमाहात्म्यञ्च भजते। महाभारतकालेऽपि देहली अतिप्रियनगररूपेण विद्यमानाऽऽसीत्। कुरुक्षेत्रस्य युद्धानन्तरं यदा हस्तिनापुर्यां पाण्डवानां सुशासनम् अभवत् तदा पाण्डवेभ्यः देहली बहु रोचते स्म। पाण्डवेषु जेष्ठः युधिष्ठिरः स्वभ्रातृभ्यः खाण्डवप्रस्थनामानं वनं अयच्छत्। सा भूमिः अत्यन्तरुक्षा उच्चावचा चासीत्। ततः श्रीकृष्णः इन्द्रमाहूतवान्, इन्द्रेण विश्वकर्मा यान्त्रिकदेवः यथोचितं विधातुमाज्ञप्तः। परिणामतः अस्य इन्द्रप्रस्थनगरस्य रचना जाता। इन्द्रस्य निर्मितित्वादिन्द्रप्रस्थेत्यन्वर्थनाम्नी नगरी जाता। मुगलकालेऽपि देहली एव शासनस्य मुख्यकेन्द्रम् आसीत्। कुतुबुद्दीनऐबकः देहल्ल्यामेव स्वशासनं स्थापितवान्। स एव कुतुबमीनार - कुव्वत-ए-इस्लाम (नाम मस्ज़िद) चेत्यनयोर्निर्माणं कारितवान्[१]।

अन्तिममुगलशासकबहादुरशाहजफ़रस्य शासनानन्तरं १८५७ तमे ईशवीयेऽब्दे ब्रिटिशशासनाधीनं शासनं प्राचलत्। तदनन्तरं १९११ तमे ईशवीयेऽब्दे देहली पुनः शासनस्य राजधानी अभूत्। तदनन्तरं १९४७ तमेशवीयेऽब्दे स्वतन्त्रभारतस्य आधिकारिकरूपेण भारतदेशस्य राजधानी देहली एव स्यादित्युद्घोषिता जाता।

## अर्वाचीनसंस्कृते दिल्ली

देववाणीपरिषद्-प्रकाशितायाम् 'अर्वाचीनसंस्कृत' पत्रिकायां दिल्लीवर्णनपरासु प्रमुखरचनासु श्रीजगदीशदत्तदीक्षितस्य **'राजधान्याः सुषमावर्णनम्'** इति रचनास्ति।[२] अस्यां रचनायां दिल्लीनागरस्त्रीणां सौन्दर्यप्रशंसां कुर्वन् कविर्लिखति -

**चन्दन्ति चन्द्रोपलचर्चिताङ्ग्यः, चार्चिक्य चन्द्राञ्चितचन्द्रलेखाः।**

**चारूदराश्चन्दनचन्दलिप्ता:, हृष्यन्ति नृत्यन्ति चषन्ति रामा:॥**

(२/२, श्लो. १)

दिल्लीस्त्रिय: शोभा चित्तं हरतीति भाव:। अस्या: चरितं यथा वर्णितम्,

**चाञ्चल्यचर्व्यं खलु जीवनं वै, लक्ष्म्यास्तु लक्ष्यं परिपूरितं भो:।**

**लोलुम्बमाना अथ दृश्यमाना:, क्रीडारता: प्रोन्नतवक्षभागा:॥**

(२/२, श्लो. २)

काव्येऽस्मिन् कविना अतिसूक्ष्मेक्षिकया तां विलोक्य मनोहरवर्णनं कृतम्। रचनेयं दिल्लीस्त्रिय: प्रति अवश्यमेव रागविरहं जनयति।

राजधान्या: सुषमावर्णनम्-इन्द्रवज्रावृत्तम्-छेकानुप्रासालङ्कार: छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा। (श्लो. १-३)

**'मिहिरावलीं (महरौलीं) दृष्ट्वा'** इति[३] शीर्षकेण रससिद्ध: नव-नवरचनाप्रणयनशील: -'अभिराज'राजेन्द्रमिश्र: मेहरौलीपरिसरं वर्णयति। वर्ण्यविषयत्वेन काव्येऽस्मिन् कवि: महरौलीलौहस्तम्भस्य आत्मनिवेदन मतिमाधुर्यरीत्या स्वीये काव्ये उद्घाटयति। मिहिरावल्या: क्षतविक्षतस्वरूपं दृष्ट्वा कविर्लिखिति -

**वारं वारं त्वमसि लोकिता, भग्नपञ्जरा भुग्नकन्धरा।**

**क्षतविक्षतविग्रहा दुर्ग्रहा, श्रीहतनेत्राभ्यां मिहिरावलि!॥**

(९/२, श्लो. १)

अनेकाक्रमणकारै: विध्वंसकप्रहारै: क्षता कृता तथाप्यद्यास्या: शोभा अतिमनोज्ञा दृश्यते -

**शतशतशूलवेदना:स्पन्दैश्छिन्ना भिन्ना।**

**नतोन्नतं स्वातीतमिदानीं त्वं गणयन्ती जनै: दृश्यसे॥**

(९/२, श्लो. १४)

काव्येऽस्मिन् कवेरियं सूचनाऽपि समभिव्यज्यते यद् अस्मद्-राष्ट्रीयं धरोहरं प्रति शासनस्य सदैव उदासीनभाव एव भवतीति।

**'दिल्ली'** इति शीर्षककाव्यं 'कविरत्नेन' श्रीओमप्रकाशठाकुर-महाभागेन विरचितम्।[४] काव्येऽस्मिन् कविना दिल्लीनगरस्य सामाजिकस्थितिं,

'अर्वाचीनसंस्कृत' पत्रिकायां प्रकाशिता: दिल्लीवर्णनपरा: रचना:

यान्त्रिकीं प्रगतिं, राजनीतिकचर्चाञ्चावलम्ब्य सुष्ठुतया समीक्षा कृता। यथा-

**भारतदेशराजधानीयं रुचिरो राजनीतिरणरङ्गः।**

**अत्र बलादनिच्छुरपि कामं जनो जायते जातासङ्गः।।**

(१४/२, श्लो. १०)

मात्रवृत्तम्। क्वचिदत्र रूपकालङ्कारो भाति।

**लक्षण** - रूपकं रूपितारोपाद्विषये निरपह्नवे। (श्लो. ३)

अस्मिन् एव अङ्के **'महानगरजीवनम्'** इति नाम्ना श्रीठाकुरमहाभागस्य प्रसिद्धा रचना वर्तते। तस्यामपि कविना मित्रसंवादरूपेण दिल्लीमहिममण्डनं संकीर्त्तितम्।

गीतिकाव्यम्, मुक्तछन्दः।

निदर्शना उत्प्रेक्षा च आलङ्कारौ दृश्येते अत्र।

लक्षणम्-निदर्शना-सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। (दि./५ गी.)

**'देहली वर्द्धताम्'** इति चतुर्विंशतिवर्षे तृतीयेऽङ्के १५.०७.२००२ तमेशवीयेऽब्दे प्रकाशितं काव्यमिदं श्रीधरप्रसादबलूनी महाभागेन विरचितम्। अस्मिन् काव्ये कविः दिल्लीनगरं प्रति भृशं स्निह्यति अत्यधिकं समादरं वा धारयति।

अननैव हेतुना कविः कामयते -

**धर्मसाहित्यसंगीतसंस्कारिता चित्रनाट्येषु सा दर्शकैः संश्रिता।**

**कार्यसक्तैर्जनैः मार्गयात्राभरैः यामिनी जाग्रता देहली वर्धताम्।।**

(२४/३, श्लो. ५)

अत्र स्रग्विणी वृत्तम् - तल्लक्षणं यथा-रैश्चतुर्भिर्युता स्रग्विणी सम्मता नाम। परिकरालङ्कारः - उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः। (श्लो. ३, ४, ५)

सप्तविंशत्यात्मके काव्येऽस्मिन् दिल्ली सदैव कीर्तिं, वृद्धिं, मुदं शोभां च प्राप्नुयाद् इति कवेर्हार्दिकी इच्छा पदे-पदे दृश्यते।

**'देहली'**[५] इति शीर्षकेन आधुनिकसंस्कृतसाहित्यश्रीवृद्धये भाषाभावभरितं मुक्तकत्रयं कविवरेण श्रीराधावल्लभत्रिपाठिना व्यरचि। अस्यां रचनायां देहलीं गृहावग्रहणीं, द्वारपिण्डिकां, द्वाराग्रस्थानं वा किञ्च

विश्वप्रसिद्धां भारतराजधानीं च विषयीकृत्य अल्पैरेव शब्दैः मार्मिकान् भावानुद्गिरति। दिङ्मात्रमुदाह्रियते -

**प्रतीक्षायां पदं त्वेकं ममान्तस्तद् बहिश्चान्यत्।**

**स्थितैषा चानयोर्मध्ये त्वधस्ताद् देहली सेयम्॥** (२५/३, श्लो. १)

**मेट्रोरेलम्** - [६]रचनेयं श्री आशुतोषमाथुररचिता वर्तते। काव्येऽस्मिन् अतिप्राञ्जलभाषया कविना दिल्लीनगरनिवासिनां कृते मेट्रोरेलस्य महत्त्वं प्रतिपादितम्। यथा -

**काशाकाशे विमलजलदैर्विस्मयेनेक्ष्यमाण-**

**मप्युत्क्रीडारतगजकुलैर्यामुनेऽनप्रदेशे।**

**जातोत्साहैरतनुवचनैर्नागरैः श्लाध्यमानं**

**मेट्रोरेलं चलति सुखदं राजधान्यां हि दिल्ल्याम्॥** (२५/४, श्लो.३)

**देहली-प्रपञ्चप्रभा** - इत्यस्यां रचनायां ऋषिराजपाठकेन षड्विंशपद्येषु विविधविशेषणैः सम्बोध्य देहल्याः जयकारः कृतः। काव्येऽस्मिन् कविः देहल्यां शिक्षारता, नैकप्राच्यनव्यविद्याविशारदा भवन्तीति कथयन् देहल्याः प्रत्येकं स्थलस्य दृश्यं प्रस्तौति। यथा -

**यत्र विज्ञानमैतिह्य-भूगोलके संस्कृतं राष्ट्रभाषाङ्गलं सांख्यिकी।**

**राजनीतिर्विधः साङ्गणक्यस्तथा दीप्यते विश्व-विद्यालया देहली॥**

(३०/१, श्लो. १५)

अत्र स्रग्विणी वृत्तम् तल्लक्षणं - यथा-रैश्चतुर्भिर्मुता स्रग्विणी सम्मता।

निदर्शना - 'सम्भवन् वस्तुसम्बन्धाऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना।

---

**टिप्पणी-**

१. विशेषः द्रष्टव्यः-प्राचीन भारत, के.सी. मजूमदार।

२. अर्वाचीनसंस्कृतं वर्ष १, द्वितीयोऽङ्कः १५.०४.१९८०।

३. अर्वाचीनसंस्कृतं वर्ष ९, द्वितीयोऽङ्कः, १५.०४.१९८७।

४. रचनेयं चतुर्विंशवर्षे द्वितीयेऽङ्के १५.०४.१९९२ तमेशवीयेऽब्दे प्रकाशिता।

५. पञ्चविंशवर्षे तृतीयेऽङ्के १५.०७.२००३ तमेशवीयेऽब्दे प्रकाशिता कविता।

६. पञ्चविंशवर्षे चतुर्थोऽङ्के १५.१०.२००३ तमेशवीयेऽब्दे प्रकाशिता।

●

---

## संस्कृतप्रशस्तिः

विद्यार्थी यदि संस्कृतं पठति चेद्धन्यं भवेज्जीवितं
सौन्दर्यं सुलभं सदा सुखकरं जिज्ञासयाध्यापने।
आनन्दं लभते मनोनुभवदं पाठांश्च सम्बोधने
विज्ञानं निखिलं बिभर्ति सुरवाक् मुक्तिं ददाति ध्रुवम्॥

## मैत्री-वैशिष्ट्यम्

मित्रं नाम नरस्य रूपमधिकं प्रत्येकमीप्साकरम्
सख्यं स्यात् करणीयमेकमंनसा तत् स्यात् प्रकृत्याः वरम्।
भावाभावविवर्जितं शुभकरं स्तोतुं च योग्यं प्रियं
शुद्धं सत्यमतीव सत्त्वसहजं तस्मिन् भवेत् गौरवम्॥
चतुर्विधं त्यजेन्मित्रं तदनर्थकरं मतम्।
कार्यद्रोही अपार्थी च मूर्खश्चारो न संशयः॥
विज्ञानखनिजं मित्रं स्पष्टवाक् स्फटिकादपि।
सद्गुणं सस्मितं मित्रं प्राप्यतां सर्वमानवैः॥
मृदुमधुरवाक्भूषं अतिकोमलचेतसम्।
सुमनोहरसान्निध्यं मैत्री धरति तत् ध्रुवम्॥

–रघुराम शर्मा

●

# दिल्लीतः प्रकाशिताः संस्कृत पत्र-पत्रिकाः

-डा. अभिनव शुक्लः
संयुक्तसम्पादकः 'अर्वाचीनसंस्कृतम्'
आर ६ वाणी विहारः, नई दिल्ली- ११००५९

संस्कृत-पत्र-पत्रिकाः भारतस्य प्रायः सर्वेभ्यो राज्येभ्यः प्रदेशेभ्यः प्रकाशिता अभूवन्। दिल्लीतोऽपि नैकाः पत्रिकाः प्राकाश्यन्त। अस्मिन् लेखे समासतो दिल्लीतः प्रकाशिताः पत्रिका अवलम्ब्य सूच्यते। दिल्लीतः दैनिक-साप्ताहिक-पाक्षिक-मासिक-त्रैमासिक-षाण्मासिक-पत्रिकाणां प्रकाशनमभूत्। अद्यापि काश्चन पत्रिकाः प्रकाश्यन्ते।

**विजयते**

'विजयते' इत्याख्यं दैनिकं पत्रं दिल्लीतः प्रकाश्यते। अस्य पञ्जीकरण संख्या R.N. No. DELSAN/2009/3029 इत्यस्ति। अस्य प्रकाशनं २००९तः प्रारब्धम्। वार्षिकग्राहकशुल्कं रू० २८०/- वर्तते। एकस्यांकस्य मूल्यं रू० १.०० अस्ति। पत्रमिदं डी.ए.वी.पी.तः विज्ञापनानि लभते। अस्मिन् पत्रे वार्ता एव संगृह्य प्रकाश्यन्ते। श्री रामकिशन राठी अस्य सम्पादकः प्रकाशकश्चास्ति। अस्य 'सी १०१/रोहिणी, सेक्टर ९ दिल्ली- ११००८५' तः प्रकाशनं भवति। भाषायां परिष्कारा अपेक्ष्यन्ते।

**भारतवर्षजनतादैनिकसंस्कृतम्**

'भारतवर्षजनतादैनिकसंस्कृतम्' इत्याख्यं पत्रं १.७.२००३ तमे दिनाङ्के दैनिकसंस्कृतपत्ररूपेण प्रकाशितमभूत्। अस्य पञ्जीकरणसंख्या R.N. DELVIL2003/10311 अस्ति। अस्य प्रकाशक-सम्पादकः आचार्यरामकुमारशर्मास्ति। अस्य दैनिकपत्रस्य शीघ्रमेव प्रकाशनमवरुद्धम्। पश्चादस्य नाम **'भारतवर्षजनतासंस्कृतम्'** इत्यभवत्। साप्ताहिकरूपेण चास्य प्रकाशनं प्रारब्धम्। अस्मिन् अष्टसु पृष्ठेषु वार्ताः, लेखाः, गद्य-पद्यात्मिका रचनाः, बालोपयोगिनी सामग्री, प्रश्नोत्तरी-इत्यादीनां प्रकाशनमभूत्। अस्य प्रत्यङ्कं मूल्यं सप्त रूप्यकाणि आसीत्। अस्य प्रकाशने सातत्यं नादृश्यत। अन्तिमोऽङ्कः ३१.३.२०११ तमे दिनांके प्रकाशितोऽभूत्। अस्य प्रकाशन संकेतोऽस्ति 'मं. नं. ४७५ बाजार पाना, कराला, दिल्ली-११००८१'।

**शारदा**

'शारदा' पुण्यपत्तनात् मासिकरूपेण पं. वसन्त अनन्त गाडगील-महाभागानां प्रधानसम्पादकत्वे विगत त्रिपञ्चाशद्ववर्षेभ्यः प्रकाश्यते।

अस्याः पत्रिकायाः षड् अङ्काः पञ्चदशविश्वसम्मेलनावसरे दिल्लीतः राष्ट्रियसंस्कृतसंस्थान-सहयोगेन प्रकाशिताः। ५-१०.१.२०१२ तमेषु दिनांकेषु प्रकाशितेषु षट्सु अंकेषु विश्वसंस्कृतसम्मेलनस्य समाचाराः प्राधान्येन प्रकाशिता अभूवन्। काश्चन कविता अपि प्रकाशिता अभूवन्। चतुःपृष्ठात्मकानामङ्कानां वर्णचतुष्टय-मुद्रणमभवत्। 'शारदा'-पत्रिकायाः दैनिकरूपेण प्रकाशितानामंकानामवैतनिकसम्पादनं डा. रमाकान्तशुक्लेन कृतम्। सम्पादन- प्रकाशनसहयोगः श्रीविपिनद्विवेदिना श्री वेदप्रकाशशर्मणा च कृतम्।

**दिशा-भारती**

'दिशा-भारती'ति पाक्षिकपत्रिकायाः प्रकाशनं १९९३ तमे वर्षे प्रारब्धम्। अष्टपृष्ठात्मिकाया अस्याः पत्रिकायाः प्रकाशनं १९९८ तमं वर्षं यावत्प्राचलत्। अस्यां वार्ताः, लेखाः, कविताः, संवादाः प्राकाश्यन्त। अस्या स्वामी, प्रकाशकः मुद्रकः सम्पादकश्च डा. जीतराम भट्ट आसीत्। १२० प्राया अङ्काः प्रकाशिता अभूवन्। अस्याः प्रकाशनस्थानसंकेतोऽयमासीत् - 'बी ३०७, दिल्ली प्रशासन आवास, दिल्ली- ११००५४'।

**संस्कृत-संवादः**

'संस्कृत-संवादः' पाक्षिकं पत्रमस्ति। अस्य प्रकाशनम् ''ए-२/३२, वजीराबाद मार्गः, भजनपुरा, देहली- ११००५३'' इत्यतो भवति। अस्य पञ्जीकरणसंख्या RNI No. DELSAN/2011/38660। अस्य स्वत्वाधि कारी, मुद्रकः, प्रकाशकः सम्पादकश्च (श्रीमती) मंजू शर्मा अस्ति। अस्य पत्रस्य मुद्रणं 'राहुल ऑफसेट प्रिण्टर्स, ५२१/८, कृष्णा गली नं. १४, मौजपुर, दिल्ली-११००५३' इत्यतो भवति। पं. रामकिशोरशर्मा अस्य पत्रस्य प्रेरणादायकोऽस्ति। परामर्शदातारः डा. रमाकान्त शुक्लः, डा. बी. एल. गौडः, डा. रवीन्द्र नागरः, डा. बलदेवानन्दसागरः, आचार्यपंकजः सन्ति। प्रबन्धसम्पादकः श्री वेदप्रकाशशर्मा अस्ति। दूरभाष- संख्या ०९३११०८६७५१ अस्ति। ई-मेल संख्या sanskritsamvad@gmail.com इत्यस्ति। **'सत्यनिष्ठा जयेल्लखनी निर्भया'** इत्यस्ति पत्रस्य ध्येयवाक्यम्।

पत्रस्य प्रारम्भः २०११ तम वर्षस्य जुलाईमासतोऽभूत्। पत्रे अष्टौ पृष्ठानि भवन्ति। प्रथमाष्टयोः पृष्ठयोर्मुद्रणं वर्णचतुष्टये भवति। शेषाणां श्वेत-श्याम-रूपेण। पत्रे सम्पादकीयम्, सचित्रवार्ताः, लेखाः, कविताः समारोह-विवरणानि च प्रकाश्यन्ते। इदानीं यावत् (१-१५.४.२०१२) १९ अंका प्रकाशिताः सन्ति। पत्रस्य सम्पादनार्थम् अतिथिसम्पादका अपि सादरमामन्त्र्यन्ते। १९तमस्य अंकस्य अतिथिसम्पादकाः आचार्यगोविन्दाचार्य-महाभागाः सन्ति।

पत्रस्य प्रकाशनं नियतरूपेण भवति। पत्रस्य कृते विज्ञापनान्यपि सुलभीभवन्ति। पत्रस्य भाषायां परिष्कारा अपेक्ष्यन्ते।

**संस्कृत-प्रचारकम्**

१९५०तः 'संस्कृत-प्रचारकम्' इत्यस्याः मासिकपत्रिकायाः प्रकाशनं दिल्लीतः प्रारब्धम्। अखिल-भारतीय-संस्कृत-प्रचारक-संघ-संस्थायाः मुखपत्रिका- रूपेण इयं बहोः कालं यावत्प्रकाशिता जाता। अनेकेभ्यो वर्षेभ्य इयं पत्रिका '१८/५५० विजयपार्कः, मौजपुरम्, दिल्ली- ११००५३' इत्यस्मात् संकेतात् डा. नरदेवशास्त्रिणः प्रधानसम्पादकत्वे प्रकाशमानासीत्। १४.१०.२०११ तमे दिनांके तस्य निधनमभूत्। विगतेभ्योऽनेकेभ्यो वर्षेभ्य इदं पत्रं निरन्तरं नासीत्।

**संस्कृतामृतम्**

संस्कृतमासिकपत्रिकारूपेण 'प्रभाकर' रामरत्नशास्त्रिणः प्रधानसम्पादकत्वे १९७८तः 'संस्कृतामृतम्' प्रकाशितम्। अस्य पञ्जीकरणसंख्या R.N. 39380/78 आसीत्। अस्यां पत्रिकायां हिन्दी-संस्कृत-भाषामाध्यमेन सामयिका लेखाः, सुभाषितानि, कथाः, कविताः, सामान्यज्ञानचर्चा, संस्कृत-शिक्षा अन्या च सामान्यजनोपयोगिनी सामग्री प्रकाशिताभूत्। अस्याः पत्रिकायाः प्रकाशनकार्यालय-संकेतोऽयमासीत् - '१४१८, बाजार गुलियान, देहली-११०००६'। पत्रिकायाः मुखपृष्ठे श्लोकरूपेणास्याः प्रशस्तिरेवं गीयते स्म-

**मन्थनेन हि शास्त्राणां लब्धं यत् तुष्टिदं शिवम्।**
**अक्षयं ज्ञानदं श्रीदं तदिदं 'संस्कृतामृतम्'॥**

'प्रभाकर' रामरत्नशास्त्रिणां दिवंगमनानन्तरं 'संस्कृतामृतम्' अस्तंगतम्।

**इण्डियन नेचरः**

अष्टपृष्ठात्मकस्यास्य मासिकपत्रस्य प्रकाशनं नई दिल्लीतः २०११ तमे क्रैस्तेऽब्दे अक्टूबरमासे प्रारब्धम्। अस्य स्वामी, मुद्रकः, प्रकाशकः

सम्पादकश्च श्री विनयकुमारः अस्ति। अयं महानुभावः ०९३१३०३६५६३ इत्यस्मिन् जंगमभाषे सुलभोऽस्ति। अस्य मुद्रणं 'दिव्य आफॅसेट, बी-१४२२, न्यू अशोक नगरम्, दिल्ली-११००९६' इत्यत्र भवति। अद्यावधि पत्रस्य षड् अंकाः प्रकाशिताः सन्ति। पत्रेऽस्मिन् वार्ता हास्यकणिका-लघुकथादीनां प्रकाशनं भवति। पत्रस्य प्रवेशांके ध्येयवाक्यं 'धर्मो रक्षति रक्षितः' इत्यासीत्। कार्यकारी सम्पादकः श्री सोहन कुमारः अस्ति। भाषायां परिष्कारा अपेक्ष्यन्ते।

**संस्कृत-रत्नाकरः**

'संस्कृतरत्नाकरः' मासिकपत्रिकारूपेण १९०४ तमे प्राकाश्यमलभत। जयपुरे संस्कृतसाहित्यसम्मेलनमस्य प्रकाशकमासीत्। अस्य पत्रस्य नैकधा प्रकाशनावरोधो जातः। कदाचित् वाराणसीतोऽस्य प्रकाशनं जातं कदाचिच्च कानपुरतः।

'संस्कृतरत्नाकर'स्य केचनांकाः दिल्लीतोऽपि प्रकाशिता जाताः। म.म. परमेश्वरानन्दशास्त्रिणां गोस्वामिगिरधारीलालशास्त्रिणां च सम्पादकत्वेऽस्य प्रकाशनं दिल्लीतो जातम्। मध्ये मध्येऽस्य प्रकाशनं स्थगितमप्यभूत्। पञ्चदशविश्वसंस्कृतसम्मेलनस्यावसरे (जनवरी २०१२) संस्कृतरत्नाकरस्य प्रकाशनं पुनरभवत्। अस्य प्रधानसम्पादकः श्री रमाकान्त गोस्वामी अस्ति। प्रकाशनस्थलमित्थमस्ति- 'अ.भा.संस्कृतसाहित्यसम्मेलनम्, संस्कृत-भवनम्, ए-१०, कुतुब इन्स्टीट्यूशनल एरिया, अरुणा आसफ अली मार्ग, नई दिल्ली- ११००६७'। संस्कृतरत्नाकरे शास्त्रीया लेखाः, कविताः सामयिकलेखाश्च प्रकाश्यन्ते।

**अर्वाचीनसंस्कृतम्**

'अर्वाचीनसंस्कृतम्' त्रैमासिकी संस्कृत पत्रिकास्ति। अस्या प्रकाशनं 'देववाणी-परिषद्, दिल्ली'ति संस्था करोति। अस्याः प्रकाशनं १५ जुलाई १९७९तः प्रारब्धम्। अस्याः पञ्जीकरणसंख्या आर.एन. ३४५५४/७९ इत्यस्ति। ISSN संख्या २२३०-९५५१ इत्यस्ति। पत्रिकायाः पञ्चत्रिंशद्वर्षपूर्त्यंकः अद्यत्वे प्रकाशनाधीनोऽस्ति।

अस्याः संस्थापकः प्रधानसम्पादको डा. रमाकान्त शुक्लोऽस्ति। संयुक्तसम्पादकः डा. अभिनव शुक्लोऽस्ति। अस्य परामर्शदातृमण्डलस्य सदस्येषु- (स्व.) आचार्य डा. रमेशचन्द्रशुक्लः, (स्व.) डा. कृष्णकान्त

शुक्लः, (स्व.) डा. भास्कराचार्य त्रिपाठी, डा. रामसुरेश पाण्डेयः, डा. हरिनारायण दीक्षितः, आचार्य श्रीनिवास रथः, आचार्य राधावल्लभत्रिपाठी, 'अभिराज' राजेन्द्र मिश्रः, डा. उमाकान्तशुक्लः, डा. विष्णुकान्तशुक्लः, प्रो. किरण टण्डनः, डा. इच्छारामद्विवेदी 'प्रणवः', डा. ओमनाथ विमली च परिगणिताः भवन्ति। पत्रेऽस्मिन् शोध-समीक्षात्मका लेखाः, पाठक-पत्राणि (भवतां पत्रम्), देववाणी-परिषद्वार्ताः, संस्कृतजगद्वार्ताः, नवप्रकाशनचर्चा, महाकाव्य-खण्डकाव्य-मुक्तककाव्य-उपन्यास-कथा-रूपक-लघुकथा-अनूदितरचनादीनां प्रकाशनं भवति। संस्कृतस्य समकालीनं वैभवं प्रदर्शयन्ती इयं पत्रिका प्रायः समयतः प्रकाश्यते। कदाचित् संयुक्तांकाः अतिरिक्ताङ्कश्चापि प्रकाश्यन्ते। इदानीं यावत् १३८ अंकाः प्रकाशिताः सन्ति।

### अनादिवाक्

१९८८ तमे खैष्टेऽब्दे आचार्यरामदयालुशास्त्रिणः सम्पादकत्वे संस्कृत-सेवा-संस्थानेन 'अनादिवाक्'- इत्येतन्नाम्नी त्रैमासिकी पत्रिका प्रारब्धा। द्वितीयवर्षे एवैषा अस्तं गता।

### संस्कृतमञ्जरी

'संस्कृतमञ्जरी' दिल्ली संस्कृत अकादम्या त्रैमासिकी पत्रिकास्ति। १९९५ तम वर्षतः अस्याः प्रकाशनं डा. श्रीकृष्णसेमवालस्य सम्पादकत्वे भवति। २००२ तोऽस्याः पञ्जीकरणं संवृत्तम्। पञ्जीकरण संख्या RNI No. DELSAN/2002/8921 इत्यस्ति। अस्याः पत्रिकायाः प्रकाशनस्थलं 'दिल्ली संस्कृत अकादमी, झण्डेवालान नयी दिल्ली ११०००५' इत्यस्ति। अस्यां पत्रिकायां शोधनिबन्धाः, कथाः, पद्यानि, अकादमीसमाचाराश्च प्रकाश्यन्ते। अनेके विशेषांका अपि काले-काले प्रकाश्यन्ते। अनेके संयुक्तांकाः अपि प्रकाशिताः सन्ति। अनेकधा समयतः प्रकाशनं न भूत्वा विलम्बेन भवति।

### संस्कृतवार्ता

राष्ट्रियसंस्कृतसंस्थानस्य त्रैमासिकं वार्तापत्रम् 'संस्कृतवार्ता' संस्थानस्यमुख्यालयात् ५६-५७, इन्स्टीट्यूशनल एरिया, जनकपुरी, नवदेहली-११००५८, इत्यतः प्रकाशितं भवति।

षोडशपृष्ठतः अष्टाचत्वारिंशत् पृष्ठानां प्रकाशनं अस्या अंकेषु अजायत। पंचदशोंऽकः सद्य एव प्राकाश्यं गतः। अस्याः प्रवर्तनं संस्थानस्य वर्तमानकुलपतेः आचार्यराधावल्लभत्रिपाठिनः प्रेरणया जातम्। संस्थानस्य

परिसरेषु घटितानां विविधानां गतिविधीनां सचित्राणि विवरणानि वर्ण-चतुष्टय-मुद्रणेन प्रकाश्यन्ते।

इदानीं यावत् अस्याः पत्रिकायाः क्षेत्रं संस्थानस्य मुख्यालयः देशे स्थिताः दश परिसराश्च सन्ति। आयत्यां विश्वजनीनपत्रिकारूपेण अस्याः प्रकाशनं कर्तुं योजनास्ति। अस्याः पत्रिकायाः ISSN No. 975-2676 अस्ति। संस्कृतवार्तायाः मुख्यः परामर्शदाता कुलपतिः आचार्यः राधावल्लभः त्रिपाठी अस्ति। परामर्शदातृमण्डलस्य सर्वेऽपि परिसरप्राचार्याः सदस्याः सन्ति।

सम्पादकमण्डले, डा. शुक्ला मुखर्जी, डा. रत्नमोहनझाः, कू. वेंकटेशमूर्तिः, डा.प्रफुल्लगडपालश्च सन्ति। पत्रिकायाः उपान्तपृष्ठे विविधवृत्त पत्रेषु प्रकाशिताः संस्थानसम्बन्धिन्यः वार्ता अपि यथावत् प्रस्तूयन्ते। **'वृत्तदर्पणे संस्थानम्'** इत्यस्य पृष्ठस्य शीषर्कमस्ति।

**संस्कृतविमर्शः**

'संस्कृतविमर्शः' राष्ट्रियसंस्कृतसंस्थानमुख्यालयस्य षाण्मासिकी शोधपत्रिकास्ते। अस्याः पत्रिकायाः प्रकाशनं १९७३तः प्रारब्धम्। बहुकालं यावत् इयं पत्रिका अनियतरूपेण प्रकाशिताजायत। एकबारं चतुर्णां वर्षाणां संयुक्ताङ्कस्य प्रकाशनं केनचित् प्रकाशकेन कृतम्। १९९५ तः इयमवरुद्धा जाता। २००८तः संस्कृतविमर्शस्य नवशृंखला कुलपतेराचार्यराधावल्लभत्रिपाठिनः प्रधानसम्पादकत्वे पुनरारब्धा। नवशृंखलायां षण्णामङ्कानां प्रकाशनमद्यावधि जातम्। पत्रस्य ISSN संख्या- ०९७५ अस्ति। पत्रिकायां प्रायः शोधलेखा एव प्रकाश्यन्ते ये विद्वद्भिः परिशीलनीया भवन्ति।

**शोधप्रभा**

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठेन षाण्मासिकी शोधपत्रिका 'शोधप्रभा' प्रकाश्यते। अस्यां पत्रिकायां शोधलेखाः प्राधान्येन प्रकाश्यन्ते। यदा कदा पद्यानि भाषणानि चापि प्रकाश्यन्ते। पत्रिकायाः प्रधानसम्पादकः कुलपतिरेव भवति। अद्यत्वे सम्पादकः प्रो. रमेशकुमारपाण्डेयः अस्ति।

कासाञ्चित् पत्रिकाणां चित्राणि अग्रिमे पृष्ठे दीयन्ते।

●

अर्वाचीनसंस्कृतम्
(अर्वाचीनसंस्कृतपरकं त्रैमासिकं पत्रम्)
डा० रमाकान्त शुक्लः
डा० अभिनव शुक्लः
देववाणी-परिषद्, दिल्ली
(भारतम्)

दिल्लीतः प्रकाशिताः संस्कृत पत्र-पत्रिकाः

# मताधिकार-वञ्चितः

State Election Commission Requests you to
Cast your vote for the General Election
to SOUTH DELHI MUNICIPAL
CORPORATION on Sunday 15/04/2012, Between
8.00 A.M. - 5.30 P.M.

ELECTION TO THE SOUTH DELHI MUNICIPAL CORPORATION

No. and Name of Ward: 127 - UTTAM NAGAR

Part No.: 120

Name: RAMA KANT SHUKLA

Sex: Male

EPIC No: DL/03/027/435568

Father's Name: BRAHMA NAND

Voter serial Number: 563

Polling Station No & Name: M C PRY SCHOOL SANTOSH PARK

Poll Date, Day and Time: 15/04/2012, SUNDAY, 8.00 AM to 5.30 PM

Note 1: Bringing this voter slip to the Polling Station is not compulsory. It is issued only as convenience to electors, so that the voter know their polling station and Voters Sl. No.

Note 2: If this voter slip does not have a photograph or it has wrong particulars or photograph, the voter can still be allowed to vote based on EPIC or alternative identity documents permitted by Election Commission of India.

Signature and Stamp of BLO

Date:

अद्य १५.४.२०१२ तमे दिनांके अर्वाचीनसंस्कृतस्य प्रकाशनदिवस आसीत्। मया सम्पादकीयं लेखनीयमासीत्। तदनु च नवनीतपत्रेषु (बटर पेपर्स) वर्णांकनं कृत्वा मुद्रणालये तेषां प्रापणं करणीय-मासीत्। अद्यैव च दिल्ली-नगर-निगमस्य निर्वाचनमप्यासीत्। तत्र मतदानं कर्तुमपि मे समीहासीत्। दिल्ली राज्यनिर्वाचनायुक्तेन श्री राकेशमेहतामहाभागेन प्रातःकालीन-दैनिकपत्रेषु आग्रह कृत आसीत् यदुतर-दायित्वपूर्णस्य नागरिकस्य प्रथमं कर्तव्य-मस्ति मतदानम्। अतोऽहं मतदानं कृत्वैव अन्यत्किञ्चित् कर्तुमभिलषामि स्म। अष्टवादनतः मतदानं निश्चितमासीत्। 'एम.सी. प्राइमरी स्कूल सन्तोष पार्क इत्यत्र मतदानकेन्द्रम् अष्टवादनतः प्रागेव प्राप्तः। अहमेव प्रथमो मतदाता आसम्। अष्टवादनादूर्ध्वं यदाहं मतदानधिकारिणः सम्मुखं गत्वा स्वपरिचयपत्रं राज्यनिर्वाचनायोगेन ममावासे प्रेषितं विवरणपत्रं च प्रदर्शितवान् तदा तेनाहं सूचितो यन्मम नाम मतदातृसूच्यां नास्ति। मया स्पर्धिनां प्रतिनिधयः पृष्टाः। तेषां सूच्यां मम नामासीत्। मया पुनः अधिकारी पृष्टः। इदानीं तेन सूची दर्शिता। तत्र मम नाम त्वासीत् किन्तु रक्तलेखन्या तत्र बहूनि नामानि निरस्तान्यासन्। संभवतः क्वचिदन्यत्र मतदानकेन्द्रे तेषां स्थानान्तरणमभूत्। सर्वकारीयः प्रबन्धः कीदृश इति विलोक्याहं गृहमागतः। स्वकार्यस्थलं प्राप्य कार्यप्यापृतोऽभूवम्। लोकतन्त्रे मताधिकारस्य प्रयोगं कर्तुं नापारयम्। राज्यनिर्वाचनायुक्तस्य आग्रहं रक्षितुमनीशः सन् खेदमनुभवामि। जागरूकस्य नागरिकस्य तु कर्तव्यमस्ति मताधिकारप्रयोगः किन्तु तदनुरूपा व्यवस्था तु निर्वाचनायोगेन सुनिश्चेतव्या। मत्सदृशा अनेके जना मताधिकारवञ्चिताः स्युः। तेभ्यो मम हार्दिक्यः सहानुभूतयः समर्प्यन्ते।

– रमाकान्त शुक्लः

१५.४.२०१२ प्रातः ९.००वादने
मताधिकार-वञ्चितः

# देववाणीपरिषद्वार्ता:

## 'अर्वाचीनसंस्कृतम्' चतुस्त्रिंशत्तमे वर्षे प्रविष्टम्

'देववाणी-परिषद्, दिल्ली'ति संस्थया प्रकाश्यमानं **'अर्वाचीनसंस्कृतं'** नाम त्रैमासिकं पत्रं चतुस्त्रिंशत्तमे वर्षे प्रविष्टम्। चतुस्त्रिंशत्तमवर्षस्य प्रथममतिरिक्तमङ्कं १५.२.२०१२तमे दिनांके श्रीलालबहादुर- शास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतिः डा. (श्रीमती) उषा कपूरमहाभागा लोकायार्पिवती। तया अंकस्य मुखपृष्ठे स्वहस्ताक्षराणि विधाय प्रथमं प्रतिरूपं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्यपूर्वकुलपतये किञ्च महाकवये 'अभिराज'राजेन्द्रमिश्राय समर्पितम्। तया अंकप्रकाशने स्वीयाः शुभाः कामनाः समर्पिताः।

अस्मिन्नवसरे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पुराणेतिहासविभागा-चार्याध्यक्षः डा. गंगाधरपण्डा, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शिक्षा-विभागाचार्यः डा. भास्करमिश्रः, साहित्य-विभागाचार्या डा. अमिताशर्मा, व्याकरण-विभागाचार्या डा. कमला भारद्वाजः, डा. जयकान्तशर्मा, हिन्दीविभागस्य आचार्या डा. सविता डा. सत्यवती त्रिपाठी, पुराणेतिहास-विभागस्य पूर्वाध्यक्ष आचार्य रमेशचतुर्वेदः, आचार्य हरिहरत्रिवेदी, शोध-प्रकाशनविभागाध्यक्ष आचार्यरमेशचन्द्रपाण्डेयः डा. रश्मि मिश्रा, डा. देवेन्द्र मिश्रः, सुनीता द्विवेदी, डा. सुदीप जैनः डा. रामभद्र त्रिपाठी, प्रतिभा, संस्कृत-संवाद-प्रबन्धसम्पादकः श्रीवेदशर्मा अन्ये आचार्याः विद्वांसश्च विदुष्यश्च हस्ताक्षराणि अकुर्वन्।

अर्वाचीनसंस्कृतस्य प्रधानसम्पादकेन डा. रमाकान्तशुक्लेन सूचितं यत् अर्वाचीनसंस्कृतस्यास्मिन्नंके प्राधान्येन डा. अर्चनाजोशी-महाभागया संस्कृतेऽनूदिताः पञ्चपञ्चाशत् लघुकथाः 'कथाञ्जलि' रिति शीर्षकेण प्रकाशिताः।

लोकार्पण-समारोहस्याध्यक्षतां देववाणी-परिषदध्यक्ष आचार्य डा. इच्छा-रामद्विवेद 'प्रणवः' निरवहत्।

## एच.के. आर्ट्स कालेजे साहित्य-वितरणम्

देववाणी-परिषदा १८.२.२०१२ तमे दिनांके अहमदाबाद-नगरे हरिवल्लभ कालिदास आर्ट्स कालेजे तत्रत्यसंस्कृतविभागस्य सहयोगेन

साहित्य-वितरणमनुष्ठितम्। अस्मिन् अवसरे तत्रत्यसंस्कृतविभागाध्यक्षेण डा. हर्षदेवमाधवेन किंच परिषदो महासचिवेन डा. रमाकान्तशुक्लेन उपस्थितेभ्यः सर्वेभ्यः छात्रेभ्यः अध्यापकेभ्यश्च 'भाति मे भारतम्' इत्यस्य काव्यस्य गुजराती-संस्करणं प्रदत्तम्। पुस्तकवितरणानन्तरं सवैरेव समुपस्थितैः जनैः डा. रमाकान्तशुक्लेन साकम् सामूहिकरूपेण 'भाति मे भारतम्' गीतम्। अन्ते च डा. हर्षदेवमाधवेन काव्यपाठानान्तरं धन्यवादज्ञापनं कृतम्।

**'दर्शने' साहित्यवितरणम्**

१८.२.२०१२ तमे दिनांके अहमदाबादनगरे छारोडी-स्थिते 'दर्शनम्' इत्यस्मिन् संस्कृतमहाविद्यालये परिषदा साहित्य-वितरणं कृतम्। महाविद्यालयस्य प्रधानाचार्येण आचार्य भा. वं. रामप्रिय शास्त्रिणा परिषन्महासचिवेन डा. रमाकान्तशुक्लेन च समुपस्थितेभ्यः सर्वेभ्योऽपि विद्वद्भ्यः गुजरातीलिपिभाषानुवादसहितं 'भाति मे भारतम्' नाम काव्यमुपहृतम्। अहमदाबादस्थ 'भागवतविद्यापीठ'च्छात्रेभ्यः पोरबन्दरस्थसान्दीपनि-आश्रमच्छात्रेभ्योऽपि पुस्तकानि प्रापितानि।

**'कथाञ्जलेः' लोकार्पणम्**

देवावाणी परिषदा ११७ तम ग्रन्थ रूपेण प्रकाशितस्य लघुकथा-संकलनस्य **'कथाञ्जलेः'** लोकर्पणम् १५/३/२०१२ तमे दिनांके राष्ट्रिय-संस्कृतसंस्थानस्य नवदिल्लीस्थे मुख्यालये समपद्यत।

परिषन्महासचिवेन डा. रमाकान्त शुक्लेन अतिथिभ्यः स्वागतं व्याहरता विज्ञापितं यदस्मिन् लघुकथासंग्रहे प्रसिद्धहिन्दीलघुकथाकारस्य डा. योगेन्द्रनाथशुक्लस्य पञ्चपञ्चाशत् हिन्दीलघुकथा डा. अर्चनाजोशी-महाभागया संस्कृतेनानूदिताः सन्ति। प्रायः सर्वा अपि एकपृष्ठात्मककलेवरा इमा लघुकथाः कारुण्यपर्यवसायिन्यः सन्ति। सर्वा अपि इमाः कथाः झटिति मर्म स्पृशन्ति। देववाणी-परिषदा हिन्दीमूलेन सह संस्कृतेनानूदिता इमाः कथाः प्रकाश्य सन्तोषोऽनुभूयते।

ग्रन्थस्य लोकार्पणं राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिना किञ्च सुख्यात-साहित्यकारेण आचार्य राधावल्लभत्रिपाठिना कृतम्। तेनोक्तं यत्

लघुकथा अथवा केषांचित् मतानुसारं 'टुप्कथा' कथासाहित्यास्य काचन नवीनैव विधा विद्यते। अभिराजेन्द्रमिश्रस्य, नारायणदाशस्य अन्येषां च केषांचित् लघुकथा दृष्टिपथमायाताः। डॉ. योगेन्द्रनाथ शुक्लस्य हिन्दीकथा अस्यां विधायां महत्त्वशालि अवदानं चकास्ति। श्री महीपसिंह-गोविन्दमिश्रादिभिः एतासां लघुकथानां महता संरम्भेण प्रशंसा कृता। मराठी-कन्नड-आंग्ल-निमाड़ी-मालवी-पंजाबी भाषासु एतासां कथानां अनुवादाः जाताः। इमा कथा सांकेतिकं भावपूर्णञ्च रूपं गृहीतवत्यः। प्रतीकात्मककथासु व्यञ्जनायाः सम्भावना युगबोधश्च वर्तेते। दिङ्मात्रं 'अन्याय' इति कथा उदाहर्तुं शक्यते।

ग्रन्थस्य समीक्षणं कुर्वता समीक्षकप्रवरेण किञ्च राष्ट्रियसंस्कृत-संस्थानस्य साहित्यविभागे सहायकाचार्येण डा. अजयकुमारमिश्रेण व्याहृतं यत् कथाञ्जलिः पञ्चपञ्चाशत् लघुकथानां गुच्छोऽस्ति यः अद्वितीयोस्ति। इमा कथा मर्मस्पर्शिन्यः मानवीयसंवेदनापूर्णाश्च सन्ति। आभिः संस्कृतसाहित्ये समकालीनता संप्रविष्टा यतो हि जनजीवनस्य निकटवर्तिन्यः घटना पाठकमनांसि सद्य एव स्पृशन्ति। मूललेखकं अनुवादकञ्च संयुक्तरूपेण एकत्र प्रदर्शनार्थं प्रकाशिका 'देववाणी-परिषद् दिल्ली' सर्वथा अभिनन्दनार्हा अस्ति।

अस्मिन्नवसरे मूलकथाकारेण संस्कृतरूपान्तरकर्त्र्या च एका लघु कथापि श्राविता यां संश्रुत्य सर्वेऽपि समुपस्थिताः सहृदया भावमग्नाः सञ्जाताः।

समारोहस्याध्यक्ष्यं देववाणी-परिषदोऽध्यक्षेण आचार्य इच्छाराम-द्विवेदप्रणवेन निर्व्यूढम्। तेन डा. जनार्दन प्रसादपाण्डेयविरचिता 'निस्यन्दिनी' लोकायार्पिता।

कार्यक्रमस्य प्रारम्भः ऋषिराजपाठककृतेन सामगानेन किञ्च श्री दिनेशचन्द्रपाण्डेयकृतेन सरस्वतीवन्दनेनाभूत्। समापनं श्रीसुनीलजोशी - हेमन्तजोशी - युवराजभट्टराई - प्रभृतिभिः कृतेन शान्तिपाठेनाभूत्। कार्यक्रमस्य सञ्चालनं परिषत्सहसचिवः श्री ऋषिराजपाठकः कृतवान्।

(डा. अभिनव शुक्लः)

●

# चित्राणि

डा.हर्षदेवमाधवः साहित्यवितरणं कुर्वन्।

पं.गौरीनाथशास्त्रिस्मृतिव्याख्यानमाला

कथाञ्जलेर्लोकार्पणम् ( १५.३.२०१२ )

कथाञ्जलिं स्वीकुर्वती स्नेहलताउपाध्याय

गीर्वाणगुर्जरीकविसमवाये ( वामतः ) आचार्यनरेन्द्रकुमारपण्ड्या, डा.हर्षदत्रिवेदी, डा. रमाकान्तशुक्लः, स्वामिपादाः, डा. भाग्येश जहा, डा. भा.वं. रामप्रियशास्त्री। ( १८.२.१२ )

# संस्कृतजगद्वार्ता:

## पं. गौरीनाथशास्त्रि-स्मृति-व्याख्यानमाला

कोलकातायां फरवरीमासस्य द्वितीये दिनाङ्के नरेन्द्रपुरस्थ-रामकृष्णमिशनमहाविद्यालये राष्ट्रियसंस्कृतसंस्थानस्य सहयोगेन पं. गौरीनाथ-शास्त्रि-स्मृति-व्याख्यानमालाया आयोजनमभवत्। मुख्यातिथिना अर्वाचीनसंस्कृत-पत्रिका-प्रधान-सम्पादकेन किञ्च राष्ट्रिय-संस्कृत-मुख्यालये शास्त्रचूडामणिपण्डितेन डा. रमाकान्तशुक्लेन संस्कृतेऽनूदितं साहित्यमवलम्ब्याभिभाषितम्। तेनोक्तं यद् गुण-परिमाणदृशा अनूदितसाहित्यस्य महत्त्वमस्ति। तेन अनूदितसाहित्यस्य सूचीकरणस्यावश्यकता रेखांकिता। तेन पं. गौरीनाथशास्त्रिसम्बन्धीनि संस्मरणान्यपि श्रावितानि। संस्थानस्य कुलपतिना आचार्यराधावल्लभत्रिपाठिना आध्यक्ष्यं निर्व्यूढम्। अवसरेऽस्मिन् डा. नारायणदाश-आचार्यसीतानाथशास्त्रि- डा. अरुणरञ्जनमिश्र-डा. धर्मेन्द्रकुमारसिंहदेव- पं. तन्मयकुमारभट्टाचार्य- डा.अजयकुमारमिश्र- प्रभृतयो विद्वांस उपस्थिता आसन्।

## पुराणेषु तीर्थाटनम्

नवदेहल्यां श्रीलालबहादुरशास्त्रिसंस्कृतविद्यापीठे तत्रत्यपुराणेतिहास-विभागेन १५-१७.०२.२०१२ तमेषु दिनांकेषु 'पुराणेषु तीर्थाटनम्' इति विषयमवलम्ब्य दिवसत्रयव्यापिनी राष्ट्रिया संगोष्ठी आयोजिता। उद्घाटनसत्रस्य आध्यक्ष्यं विद्यापीठस्य कुलपतिः डा. उषारानी कपूरमहाभागा निरवहत् मुख्यातिथिरूपेण च डा. रमाकान्तशुक्लः समुपातिष्ठत्। सारस्वतातिथिरूपेण विद्यापीठस्य साहित्यसंस्कृतिसंकायपूर्वाध्यक्षः प्रो. रमेशचतुर्वेदी समुपस्थितः। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पुराणेतिहासविभागाध्यक्षः प्रो. गंगाधरपण्डा बीजभाषणमकरोत्। संगोष्ठ्याः संयोजकेन विद्यापीठस्य पुराणेतिहास-विभागाचार्याध्यक्षेण डा. इच्छारामद्विवेद'प्रणवेन' अतिथीनां स्वागतं धन्यवादज्ञापनं च कृतम्। तदनु त्रिषु दिवसेषु षट्सु सत्रेषु डा. रमाकान्तशुक्लस्य, आचार्यरमेशचन्द्रचतुर्वेदस्य डा. कमलाभारद्वाजमहाभागायाश्चः आध्यक्ष्ये पञ्चाशत्प्रायाः शोधलेखाः अवाच्यन्त।

समापनसमारोहस्य आध्यक्ष्यं विद्यापीठस्य कुलपतिः निरवहत्। सत्रसञ्चालनं डा. शीतलाप्रसादशुक्लः अकरोत्।

## गुजरातसंस्कृतसाहित्यअकादमी

गुजरातसंस्कृतसाहित्यअकादम्या १८.२.२०१२ तमे दिनांके अहमदाबाद-नगरे छारोडीस्थ-स्वामिनारायण- गुरुकुलविश्वविद्याप्रतिष्ठान-परिसरे 'दर्शनम्' इत्याख्ये संस्कृत-महाविद्यालये **'गीर्वाणगुर्जरी संस्कृतक-विसमवायः'** समायोजितः। संस्कृतकविसमवायस्याध्यक्ष्यं गुजरातसर्वकारस्य संस्कृतिमंत्रालयसचिवेन श्रीमता भाग्येशजहामहाभागेन निर्व्यूढम्। मुख्यातिथि-रूपेण दिल्लीतः डा. रमाकान्तशुक्लः समुपस्थितः। प्राप्तसाहित्याकादमी-पुरस्कारेण विश्रुतकविना डा.हर्षदेवमाधवेन किञ्च युवकविना डा. रवीन्द्रकुमारखाण्डवालामहाभागेन कविसमवायस्य संचालनं कृतम्। पंचदशप्रायैः कविभिः स्वरचनाः पठिताः। डा. अजयकुमारमिश्रेण 'कथन्' 'भूकम्पो मया नानुभूतः' इत्येतच्छीर्षकान्वितं रचनाद्वयं प्रस्तुतं यत्र गृहिण्याः तपः किंच सामाजिकसौहार्दस्य आकांक्षा वर्णिता। डा. राजेन्द्रनानावटीमहाभागेन, रमाकान्तशुक्लेन, हर्षदेवमाधवेन अन्यैश्च कैश्चन कविभिः गुर्जरधरायाः प्रशस्तिः गीता। श्री वासुदेव पाठकः डा. हर्षद त्रिवेदी (अकादमी-सचिवः), श्री भाग्येश जहा, डा. नरेन्द्र पण्ड्या, डा. सुरेश व्यासः, डा. कौशल तिवारी, डा. रवीन्द्र पण्डा, डा. प्रवीण पण्ड्या, डा. रीता त्रिवेदी, डा. अजित ठाकोरः, स्नेहल जोशी, डा. जयप्रकाश नारायण द्विवेदी अन्ये च केचन कवयः तांस्तान् विषयान् अधिकृत्य स्वप्रत्यग्रा रचना अपठन्।

## विद्यापीठे प्राकृतगोष्ठी

नवदेहल्यां श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठे तत्रत्यप्राकृत-भाषाविभागेन २३-२४.०२.२०१२ तमेषु दिनाङ्केषु रूपकेषु प्राकृतभाषा-प्रयोगमवलम्त्य दिवसद्वयव्यापिनी राष्ट्रिया संगोष्ठी समायोजिता यस्याः उद्घाटनसत्रे मुख्यातिथिरूपेण प्रसिद्धहिन्दीसमालोचकः डा. नामवरसिंहः उपस्थितः। अध्यक्षरूपेण विद्यापीठस्य कुलपतिः डा. उषारानी कपूरमहाभागा, बीजभाषाकर्तृरूपेण आचार्यः सत्यप्रकाशशर्मा, विशिष्टव्याख्यातृरूपेण समणीमहाभागा उपस्थिता। तदनु डा. रमाकान्तशुक्लस्य, डा. सत्यपालनारंगस्य, डा. हरिदत्तशर्मणः, डा. सत्यप्रकाशशर्मणश्च आध्यक्ष्ये विविधेषु सत्रेषु वक्तृभिः रूपकेषु प्राकृतभाषायाः विविधान् प्रयोगान् आश्रित्य शोधलेखाः पठिताः। प्राकृतभाषाविभागाध्यक्षेण डा. जयकुमारउपाध्येमहाभागेन, डा.

कल्पनाजैन महाभागया, डा. रञ्जनाजैन महाभागाया च सत्रसञ्चालनं कृतम्। परिचर्चासत्रस्य आध्यक्ष्यं प्रो. सत्यदेव चौधरी-महाभागेन निर्व्यूढम्, समापनसत्रस्य मुख्यातिथिरूपेण राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिः आचार्य-राधावल्लभत्रिपाठी समुपस्थितः। तेन संस्कृतरूपकेषु प्राकृतस्य अध्ययनं संस्कृतच्छायया अथ च मूलपाठेन सह कर्तुं विद्वांसः प्रबोधिताः। संगोष्ठ्याः संयोजक-निदेशकः प्रो. सुदीपकुमारजैनः प्राकृतभाषाध्ययनस्य विविधान् पक्षान् समुदघाटयत्।

**राष्ट्रियसंस्कृतसस्थानम् अन्ताराष्ट्रियं स्तरं प्राप्य केन्द्रीयः संस्कृत-विश्वविद्यालयो भवतु**

भारतीयसंस्कृतपत्रकारसंघेन भारतसर्वकारोऽनुरुद्धो यत् राष्ट्रियसंस्कृत-संस्थानं अन्ताराष्ट्रियप्रतिष्ठाप्राप्तः केन्द्रीयः संस्कृतवि.श्वविद्यालयो भवतु। एतदर्थं सर्वकारेण संसदि अधिनियमः पारणीयः।

भारतीयसंस्कृतपत्रकारसंवस्याध्यक्षेण डा. रमाकान्तशुक्लेन ७.३. २०१२ तारिकायां पत्रं विलिख्य प्रधानमन्त्री डा.मनमोहनसिंहः मानवसंसाधन-विकासमन्त्री श्रीकपिलसिब्बलः च एतदर्थमनुरुद्धौ। डा. शुक्लेन तस्याः सूचेः प्रतिलिपिरपि स्वपत्रेण साकं योजिता यत्र तेन प्रथमहस्ताक्षरकर्तृरूपेण स्वहस्ताक्षराणि न्यस्तानि किञ्च २०८५ जनैस्तत्र स्वहस्ताक्षराणि कृताति येषु अनेके कुलपतयः, स्वदेशीया विदेशीयाश्च लब्धप्रतिष्ठा विद्वांसश्छात्राश्च अन्तर्भवन्ति।

**राष्ट्रिय संस्कृत संस्थाने इदम्प्रथमतया होलिका-मंगल-मिलनोत्सवः**

७.३.२०१२ तमे दिनांके राष्ट्रियसंस्कृतसंस्थाने इदम्प्रथमतया होलिका-मंगल-मिलनोत्सवः समायोज्यत। अस्मिन्नवसरे संस्थानस्य कुलपतिना आचार्यराधावल्लभत्रिपाठिना संस्थानस्य सर्वेभ्यः कर्मचारिभ्यः शिक्षकेभ्यश्च शुभकामनाः प्रदत्ताः। अस्मिन्नवसरे वाराणसीस्थ-सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयस्य प्राक्तनकुलपतिना 'अभिराज' डा. राजेन्द्रमिश्रेण वर्धापन-पुरस्सरं स्वरचितं फाल्गुन-मादक-गन्ध-भरितं गीतमपि गीतम्। संस्थाने शास्त्रचूणामणिविद्वत्पदं भूषयता डा. रमाकान्तशुक्लेन संस्कृत-व्रजभाषयोः वसन्तोत्सव-होली-क्रीडन-परकाणि पद्यानि श्रावितानि। संस्थानस्य कुलसचिवेन डा. बी.के. सुब्बारायडूमहाभागेन स्वागत-भाषणं कृत्वा उपर्युक्तानां त्रयाणामपि विदुषां पुष्पगुच्छेन स्वागतमकारि। संस्थानस्य उपपरीक्षानियन्त्रकेण डा.

गोपीरमणमिश्रेण धन्यवाद-ज्ञापनं कृतम्। तेन सभायाः स्वीकृतिं लब्ध्वा संस्थाने कार्यरताय राष्ट्रपति-सम्मान-प्रमाणपत्रेणालंकरणीयाय डा. नोदनाथ-मिश्राय **'मूर्खाधिराज'** पदवी अपि समर्पिता। अस्मिन्नवसरे संस्थानस्य कुलपतिना पञ्चदशविश्वसंस्कृतसम्मेलने साहाय्यं कृतवद्भ्यः जनेभ्यः विश्वसंस्कृत-सम्मेलन-चिह्नान्यपि उपायनीकृतानि। डा. शुक्ला मुखर्जी स्मृतिचिह्नप्रदानोत्सवस्य सञ्चालनमकरोत्।

समारोहानन्तरं कुलपतिना अन्यैश्च समवेतैर्जनैः पिष्टवर्णचूर्णेन मस्तके तिलकं विधाय होलिका-पर्वणि स्वमंगलकामनाः सर्वेभ्यः उपहृताः।

**श्रीकृष्णप्रणामीसम्प्रदाय-हरियाणासंस्कृत-अकादमीभ्यां संस्कृत-संगोष्ठीद्वयमायोजितम्।**

श्रीकृष्णप्रणामीसम्प्रदायस्य चण्डीगढस्थेनाश्रमेण हरियाणा-संस्कृत-अकादम्या च चण्डीगढ़े ७.११.२०११ तमे दिनांके एका संस्कृत-विचार-संगोष्ठी समायोजिता यस्याध्यक्ष्यं डा. रमाकान्तशुक्लेन निर्व्यूढम्। अकादम्या उपाध्यक्षेण डा. रामेश्वरदत्तशर्मणा, डा. सुधीकान्तभारद्वाजेन, डा. सुरेन्द्रमोहनमिश्रेण च श्रीकृष्णप्रणामीसम्प्रदायस्य दार्शनिकसिद्धान्तान् अवलम्ब्याभिभाषितम्।

करनालस्थ- श्रीदयारामधामट्रस्टेण हरियाणा-संस्कृत-अकादम्या च २४.३.२०१२ तमे दिनांके करनाले श्रीकृष्णप्रणामीसम्प्रदायस्य जामनगरपीठाधीश्वराणां श्रीकृष्णमणिस्वामिनामाध्यक्ष्ये करनाल-सांसदस्य डा. अरविन्दशर्मणश्च मुख्यातिथित्वे एका संस्कृत-विचार-गोष्ठी आयोज्यत यत्र डा. सुरेन्द्रमोहनमिश्र-डा. रमाकान्तशुक्ल-डा.सुधीकान्तभारद्वाज-श्री मोहनाचार्य-श्रीदेवराजसप्रा-प्रभृतिभिरभिभाषितम्। अकादमीनिदेशकेन डा. सुधीरकुमारशर्मणा धन्यवादज्ञापनं कृतम्। श्रीदयारामधामन्यासाधिपतिना स्वामिश्रीजगतरामेण विदुषां सम्माननं कृतम्।

**नेशनल-मैनुस्क्रिप्ट-मिशने आचार्यत्रिपाठिनो भाषणम्**

नवदिल्ल्यां २७.२.२०१२ तमे दिनांके राष्ट्रिय-पाण्डुलिपि-मिशने राष्ट्रियसंस्कृत-संस्थानकुलपतेराचार्यराधावल्लभ-त्रिपाठिनः 'भरतनाट्यशास्त्र'मवलम्ब्य तत्त्वबोधव्याख्यानमभूत्। आचार्यत्रिपाठिना नाट्यशास्त्रस्य विविध-पाण्डुलिपीः संस्करणानि चावलम्ब्य स्वविचाराः प्रस्तुताः। तेन परिचर्चाकाले डा. सत्यपालनारंगकृताः प्रश्ना अपि समुत्तरिताः। आध्यक्ष्यं डा. कपिला

वात्स्यायनमहोदया निरवहत्। स्वागतभाषणं पाण्डुलिपि डा. मिशन निदेशिका डा. दीप्ति त्रिपाठी अकरोत्।

**जयपुरपरिसरे वार्षिकोत्सवः**

रा.सं.संस्थानस्य जयपुरपरिसरे २९.३.२०१२ तमे दिनांके वार्षिकोत्सवः सम्मानितोऽभूत्। अस्मिन् अवसरे मुख्यातिथिरूपेण ज.रा.रा.संस्कृत विश्वविद्यालयकुलपतिः आचार्यरामानुजदेवनाथः, सारस्वतातिथिरूपेण देवर्षि-कलानाथशास्त्री अध्यक्षरूपेण च परिसरप्राचार्यः डा. जि. गंगन्ना उपस्थितः।

**प्रो. गोपालकृष्णदाशाभिनन्दनन्दनग्रन्थः**

उत्कलविश्वविद्यालये संस्कृत-विभागाध्यक्षचरस्य अद्यत्वे च तत्रैव कलासंकायाध्यक्षस्य डा. गोपालकृष्णदाशस्य षष्टिपूर्त्यवसरे तस्य शिष्यैर्मित्रैः प्रशंसकैश्च २०१२ वर्षस्य नवम्बरमासे तस्मै 'अभिनन्दन-ग्रन्थः' समर्पयिष्यते। अभिनन्दनग्रन्थस्य प्रधानसम्पादकः प्रो. प्रफुल्लकुमारमिश्रोऽस्ति। परामर्शदातृ-मण्डले देशस्य प्रमुखा विद्वांसः कुलपतयश्च सन्ति।

(विपिन द्विवेदी)

●

---

शोकवृत्तम्

## डा. नरदेवशास्त्री दिवंगतः!

'संस्कृतप्रचारक'मिति मासिकपत्रिकायाः प्रधानसम्पादकः हिमाचलप्रदेशविश्वविद्यालयतश्च सेवानिवृत्तः आचार्यो डा. नरदेवशास्त्री ६७ वर्षीयायुषि कार्त्तिकमासस्य कृष्णपक्षस्य द्वितीयायां तिथौ २०६८ विक्रमाब्दे तदनुसारं १४/१०/२०११ खीष्टाब्दे प्रातः ७ वादने दिल्लीस्थिते १८/५५० विजयपार्कः, मौजपुरम्, दिल्ली- ११००५३' इत्यस्मिन् स्वनिवासस्थले दिवङ्गतः।

राष्ट्रपतिसम्मानेन समलङ्कृतः आचार्यो डा. नरदेवशास्त्रिमहाभागः आजीवनं संस्कृतभाषायाः प्रसारार्थं संवर्द्धनार्थञ्च बहुविधप्रकारेण संलग्नः आसीत्।

अर्वाचीनसंस्कृतम् डा. शास्त्रिणो निधने शोकं व्यनक्ति।

# नवप्रकाशन-चर्चा

## सौम्यवदनाकाव्यम्

अस्मिन् चित्रकाव्ये मुनि-राजसुन्दर-विजयेन २९ अनुष्टुब्वृत्तैश्चतुर्विंशतितीर्थङ्कराणां, सर्वजिनानाम्, आगमानां श्रुतदेव्याश्च स्तुतिर्विहिता। द्वाभ्यां वसन्ततिलकाभ्यामुपसंहारः कृतः। स्वोपज्ञा पुण्यवल्लभाख्या वृत्तिरपि कविना पद्यभावबोधार्थं प्रदत्ता। हर्षनिधिरित्येतन्नाम्ना गुजरातीभावानुवादोऽपि प्रदत्तः। दिङ्मात्रमुदाह्रियते द्व्यक्षरिपद्यं श्रीऋषभजिनस्तुतिपरकम्-

**वादिदेवो विदोऽवेदो वादिदेवो विदां ददौ।**
**दुर्दैवदवदेवो दो दादं विवाददावदः॥** (सौ.व./३)

अस्य पद्यस्य सम्यग्बोधार्थं 'पुण्यवल्लभा'वृत्तिरत्यन्तं सहायिकास्ति।

परिशिष्टे एकाक्षरकोषोऽपि दत्तः यस्य साहाय्यं टीकायां पदे पदे गृहीतमस्ति।

अस्य काव्यस्याध्ययनेन बोधेन च जिनभक्त्या साकं वैदुषीमपि लब्धुं समर्थः स्यात् पाठकः। चित्रकाव्य-परम्परायाम् एकविंश्याः शताब्द्याः नूतनोपहारोऽयं ग्रन्थः।

***सौम्यवदनाकाव्यम् : प्रणेता***- *मुनिराजसुन्दरविजयः,* ***प्रका.*** *श्रुतज्ञानसंस्कारपीठ, १३ विमलनाथ एस्टेट, १ श्रीमाली सोसायटी, नवरंगपुरा, अहमदाबाद-३८०००१,* ***मूल्यम्***- *अमूल्यम्,* ***संस्करणम्***- *प्रथमं वि.सं.२०६५।*

## स्मृति-स्तवकम्

स्वर्गीय पं. जीवनलाल अग्निहोत्री-महाभागानां व्यक्तित्वं कर्तृत्वं चावलम्ब्य विदुषां लेखानां संस्मरणानां रचनानाञ्च संचयनं **स्मृतिस्तवके** दृश्यते। सप्तति शीर्षकेषु व्याकरणाचार्यस्य सर्वदर्शनशास्त्रिणः सौम्यमूर्तेः पण्डितप्रवरस्य प्रतिभाम्, अध्ययनं, पाण्डित्यं, भक्तिं, दयालुतां, मन्त्रसिद्धिं, शास्त्रार्थमहारथित्वं, विचारान्, चिन्तनं, रचनाप्रणयनम् अन्याश्च तांस्तान् विपयानधिकृत्य विद्वद्भिः हिन्दी-संस्कृतमाध्यमेन स्वविचाराः प्रस्तुताः। श्रीमता रमाकान्तमिश्रेण ''श्रीव्याकरणाचार्यस्य पंचविंशपुण्यस्मृतौ गौरवगानम्'' इत्यस्मिन् शीर्षके एकादशभिः शार्दूलविक्रीडितैः द्वाभ्याम् अनुष्टुब्भ्याञ्च स्मरणीयस्य विदुषः व्यक्तित्वं चित्रितम्। तद्यथा-

**भालं यस्य विराजते स्म सततं दिव्यं त्रिपुण्ड्रार्चितम्**
**तेजोभिर्द्युतिमद् रराज नितरां यस्य प्रसन्नाननम्।**

**वासोभिः शुशुभेतरां तनुतरा यस्यांगयष्टिः सितैः**
**श्रीमान् जीवनलाल एष विदितो देवोपमः कीर्तिमान्॥ (पृ. ९२)**

अग्निहोत्री-महाभागानां पुत्रेण श्रीमता उमेशदत्तअग्निहोत्रिणा चतुर्दशभिः पद्यैः "गुरुस्वरूपपितृचरणानां वन्दनम्" कुर्वता लिखितम्-

**जिह्वाग्रे यस्य वाग्देवी कण्ठे प्रवालमालिका।**
**ललाटे शोभते यस्य त्रिपुण्ड्रभस्म लांछनम्॥**

आचार्य मिथिलाप्रसादत्रिपाठी-डा. पुष्पादीक्षित-आचार्यपरमेश्वर-नारायण शास्त्री- डा. रामलखनपाण्डेय- आचार्यनन्ददुलारेवाजपेयी-डा. रामाधारद्विवेदी-आचार्य रामप्रसादत्रिपाठी-डा. प्रेमनारायण द्विवेदी-आचार्य राधावल्लभत्रिपाठिभिः विद्वद्वरेण्यस्य अग्निहोत्री-महाभागस्य विषये याः सूचनाः प्रदत्तास्ताभिः अस्य ग्रन्थस्य पाठकः उपकृत एव भविष्यति।

***स्मृति-स्तवकम् : सम्पादक-*** *टीकाराम त्रिपाठी,* ***प्रका.*** *स्मृति-स्तवकम्, प्रकाशन समिति, सागर।* ***संस्क.*** *दिसम्बर २०११,* ***मूल्य-पुस्तकालय संस्क.*** *२००/-,* ***विद्यार्थी संस्क.*** *१००/-,* ***फोन-*** *०७५८२-२२४७०९-२२०३२०।*

**आदिशंकरलघुप्रबन्धावलिः**

अस्मिन् ग्रन्थे आदिशंकराचार्यकृताः सप्तचत्वारिंशत् रचनाः सङ्कलिताः सन्ति। सम्पादकेन डा. गौतमपटेलेन विस्तृतभूमिकायां आदिशंकराचार्यस्य ३४४ रचनानां सूचनाऽपि दत्ता। सङ्कलितासु रचनासु "अद्वैतपञ्चरत्नम्, अद्वैतानुभूतिः, आत्मबोधः, एकश्लोकी, तत्त्वबोधः, प्रश्नोत्तरमालिका, विज्ञाननौका, विवेकचूडामणिः, सर्ववेदान्तसिद्धान्तसारसंग्रहः, हस्तामलकस्तोत्रम्" इत्याद्याः रचनाः सन्ति याः अद्वैतदर्शनस्य भक्तेश्च महिम्ना भरिताः सन्ति। परिशिष्टे केनचित् आधुनिकेन विदुषा रचितम् 'श्रीशंकरभगवत्पादाचार्यसहस्रनामस्तोत्रम्", आचार्यश्रीनिवासरथप्रणीता "शंकर! तव भाषितं विजयते" इत्येतच्छीर्षका रचना, गौतमपटेलप्रणीतम् कविताद्वयञ्च योजितम्। अन्ते च अकारादिक्रमेण श्लोकानां सूची दत्ताऽस्ति। या अक्षरश्लोक-प्रतिस्पर्धिनाङ्कृते उपयोगिनी वर्तते। एकत्रैव अनेकेषां स्तोत्राणाम् अद्वैत-प्रतिपादकप्रबन्धानाञ्च उपस्थितेः ग्रन्थोऽयं पाठकानाङ्कृते उपयोगित्वं बिभर्ति।

***आदिशंकरलघुप्रबन्धावलिः : सम्पा.*** *गौतम पटेलः,* ***प्रका.*** *राष्ट्रियसंस्कृतसंस्थानम्, नईदिल्ली- ११००५८,* ***संस्क.*** *प्रथमम्, २०१२ पृ. सं. ४६४+१०=४७४।*

## अलिविलासिसंलापस्य अभिनवा टीका

अलिविलासिसंलापः उत्कृष्टं शास्त्रकाव्यम्। अस्य प्रणेता म.म. गंगाधरशास्त्री काशीपाण्डित्यपरम्परायां मणिरिव राजते स्म। नवशतकेषु १००० पद्येषु निबद्धमिदं काव्यं समग्रान् अवश्यज्ञातव्यदार्शनिकसिद्धान्तान् पुरस्करोति। सर्वाणि अपि शास्त्राणि पूर्वपक्षतयोपस्थाप्य कविरयम् अद्वैतवेदान्तदृष्ट्या तेषां खण्डनं करोति।

अस्मिन्ननुत्तमे काव्ये राष्ट्रियसंस्कृतसंस्थानस्य जयपुरपरिसरे उपाचार्यपदमलङ्कुर्वता डा. रमाकान्तपाण्डेयेन 'गंगा'ख्या संस्कृतव्याख्या प्रणीता। सा चेयं काव्येऽस्मिन् प्रथमा संस्कृतटीका। अस्य काव्यस्य प्रथमो राष्ट्रभाषानुवादः टिप्पणी चाऽपि विदुषाऽनेन व्यलेखि।

राष्ट्रियसंस्कृतसंस्थानेन प्रकाशितस्य ग्रन्थस्यास्य पूर्वार्द्धः प्रधानमन्त्रिणा डा. मनमोहनसिंहेन ५.१.२०१२ दिनांके लोकायाऽर्पितः। श्रीमता पाण्डेयेन प्रणीतेऽयं गंगाटीका एकविंशशतकेऽस्मिन् टीकापरम्परायाः सातत्यं प्रमाणयति। काव्येऽस्मिन् अलिविलासिनोः संवादमाध्यमेन तत्तच्छास्त्राणां ते ते सिद्धान्ताः पुरस्कृता विवेचिताश्च। पूर्वार्द्धेऽस्मिन् चार्वाकबौद्धजैनदर्शनानि वेदान्तदृशा निराकृतानि। गंगाकारः डा. रमाकान्तपाण्डेयः विविधसन्दर्भोपस्थापनपुरस्सरं ग्रन्थग्रन्थिभेदनमकरोदिति नूनमयं स्मारयति प्राचीनटीकापरम्परायाः।

***अलिविलासिसंलापः*** *(गंगाटीकोपेतम्) पूर्वार्धः,* ***टीकाकारः सम्पादकश्च-*** *डा. रमाकान्त पाण्डेयः,* ***प्रका.*** *राष्ट्रियसंस्कृतसंस्थानम्, नईदिल्ली-११००५८,* **संस्क.** *२०१२।*

## संस्कृतविद्वत्परिचायिका

पञ्चदशविश्वसंस्कृतसम्मेलनावसरे राष्ट्रियसंस्कृतसंस्थानेन 'संस्कृत-विद्वत्परिचायिका' प्रकाशिता। प्राग्वाचिके अन्तिमे प्रद्यट्टके प्रधानसम्पादकेन स्वीकृतं यदियं परिचायिका सम्पूर्णा नास्ति। (पृ. VI)

अस्यां परिचायिकायां १८५०-१९९० समयावधौ लब्धजनुषां विदुषामाधिक्येन परिचयो दत्तः। ५००० प्रायाणां विदुषामेकत्र परिचयदानार्थं सम्पादका अभिनन्द्यन्ते।

किन्तु अस्याः परिचायिकायाः प्रविष्टीनामद्यतनीकरणमपेक्ष्यते। क्वचित् संकेता वर्तमाना न सन्ति, क्वचिद् दूरभाष-संख्या पुरातनी दत्तास्ति, क्वचिदध्युष्टपदानि वर्तमानानि न सति, क्वचिद् निधनतिथिरस्ति क्वचिन्नास्ति, कस्यचिद् विदुषो द्विधास्त्रिधा वा उल्लेखोऽस्ति। बहूनां

विश्रुतानां विदुषामुल्लेख एव नास्ति। पं. नारायण शास्त्री खिस्ते- नाम्नः प्रविष्टिरस्ति परं पं. बदरीनाथशुक्ल-पं. पेरिसूर्यनारायणशास्त्रि-पं. गौरीनाथशास्त्रि- पं. दामोदरलालगोस्वामिप्रभृतयोऽनेके चर्चिता विद्वांसोऽत्रानुपस्थिताः सन्ति। डा. वाचस्पतिः उपाध्यायस्य निधनकालः प्रदत्तोऽस्ति पर डा. गोविन्दचन्दपाण्डेय- पं. बटुकनाथशास्त्रिखिस्ते- डा. श्रीधरभास्कर वर्णेकर- डा. रमारञ्जनमुखर्जी- डा. रामचन्द्रनारायण दाण्डेकर-चन्द्रकिशोरगोस्वामि-डा.व्रजमोहनचतुर्वेद-प्रभृतीनां निधनतिथेरुल्लेखो नास्ति।

डा. मण्डन मिश्र-डा.डी.डी. (देवीदत्त) शर्म पं. टी. वी. परमेश्वर अय्यर-डा.रामसुमेरयादवानां परिचयो वारद्वयं प्रदत्तः। डा. रामेश्वरदत्तशर्मण उल्लेखस्त्रिवारं कृतः। 'सुन्दरराजन' इत्यस्य रोमनलिप्यां मुद्रणं (सुन्दराजन) इत्येवं जातम्। डा. सुन्दरीसिद्धार्थ- डा. रूपकिशोर शास्त्रि-प्रभृतीनां पुरातना एव संकेता दूरभाषाङ्काश्च प्रदत्ताः सन्ति।

सन्दर्भग्रन्थेषु 'देववाणी-सुवास'स्य सम्पादकरूपेण डा. रमाकान्त पाण्डेयस्य निर्देशोऽस्ति। वस्तुतोऽस्य ग्रन्थस्य सम्पादकोऽस्ति 'अभिराज' राजेन्द्रमिश्रः।

एतानि दिङ्मात्रमेवोदाहरणानि सन्ति। अस्या विद्वत्परिचायिकाया महन्महत्त्वं विद्यते। किन्तु अस्या अद्यतनीकरणाय व्यापकाः प्रयासा अपेक्ष्यन्ते। यदि काचन समितिः पुनरीक्षणार्थं संघट्येत, सा च यदि वस्तुतः अनपेक्षितमपसार्य अपेक्षितं वस्तु अत्र संयोजयति तदास्या विद्वत्परिचायिकायाः समुचितान्वर्थता संसिद्ध्येत।

***संस्कृतविद्वत्परिचायिका : प्रधानसम्पादकः** राधावल्लभ-त्रिपाठी, **प्रका.** राष्ट्रियसंस्कृतसंस्थानम्, नयी दिल्ली-११००५८, मूल्यम्- ४५०/-, **संस्क.** २०१२।*

**स्वातन्त्र्यसम्भवम्**

'सनातन' कविना आचार्यरेवाप्रसादद्विवेदि-महाभागेन प्रणीतं **'स्वातन्त्र्यसम्भवम्'** नाम महाकाव्यम् १८५७ तम वर्षतः २०११ तमस्य वर्षस्य सितम्बरमासं यावत् घटितानां प्रमुखराष्ट्रियघटनानां पद्यबद्ध इतिहासोऽप्यस्ति। पंचसप्ततिसर्गेषु षट्सहस्राधिकश्लोकपरिमाणार्थम् अद्यावधि प्रणीतेषु महाकाव्येषु कीर्तिमानमपि प्रस्तौति। अथ च काव्यगुणैः पूर्णेयं रचना सामान्यपाठकान् विशिष्टविदुषश्च समानं प्रीणाति।

सुभाषितानां निधानं, सूक्तीनामाकरः, सत्प्रेरणायाः उद्भवकरः, स्वदेशगौरवस्य आविर्भावनभूमिः, भगवत्याः शारदाम्बाया विविधालंकार झंकारसहितः पदचंक्रमणध्वनिः, उदात्तकल्पनानां तथा भव्योत्प्रेक्षाणामाश्रयः अस्ति अपूर्वमिदं महाकाव्यम्। महत्त्वात् भारत्वाच्च इदानीं यावत् अद्वितीयमेव प्रतीयते।

जवाहरलालनेहरूमुखेन अस्य महाकाव्यस्य विषये कविः यथार्थमेव व्यनक्ति-

**इदं न खलु कृत्रिमं किमपि काव्यमस्मिन्, हहा**
**महाचितिरपि स्वयं नटति चित्तविद्रावणाम्।**
**इह क्षण उदित्वरो भवति वासरेऽपि स्फुटो**
**विहस्य विधुरर्चिषां शतशतैः करालः कटुः।** (स्वा.७/६८)

कविना पीठिकाबन्धनामप्रथमे सर्गे गम्भीरचिन्तनानन्तरं स्वातन्त्र्यस्य महिमा गीतः। झाँसीराज्ञा लक्ष्मीबाईवीरांगनया प्रारब्धस्य स्वातन्त्र्यसंग्रामस्य कथां प्रारभ्य डा. मनमोहनसिंहनीतस्य शासनस्य कथां यावत् पाठकेभ्यः स्वातन्त्र्यसम्भवरसं दित्सति कविः-

**लक्ष्मीन्दिरराद्यटलमोहनवेष्टितायाः**
**स्वातन्त्र्यसम्भवकथा-त्रिदशापगायाः।**
**अस्या भवन्तु रससेवनया विमुक्त-**
**क्लेशाश्च हृष्टहृदयाश्च मनीषिमुख्याः॥** (स्वा.१/७६)

महाकविः सनातनः विस्तीर्णं मंगलाचरणमातनोति। स कवीनां प्रतिभां सततलेखनीं (फाउण्टेनपेनं) च सादरं वन्दते-

**नमामि तां निर्झरिणीं कवीनामाकाशगंगां नु विशुद्धिमुग्धाम्।**
**यत्कुक्षिसूताक्षरपद्ममालां वाग्देवता श्रीरिव मूर्ध्नि धत्ते॥**

तदनु भारतवर्षं विष्णुरूपेण स्तुवन् कविर्भणति

**आदक्षिणाब्धिप्रसरं सुमेरोर्मूर्ध्नो धरां व्याप्य समुल्लसन्तम्।**
**अब्धित्रिवेणीप्रणताङ्घ्रिमूलं वन्दामहे भारतवर्षविष्णुम्॥**( २/७ )

महाकविना ग्रामटिकावर्णनप्रसङ्गे अनेकेषां शाकानाम् ओषधीनां अन्येषां च ग्रामटिकापरिसरे उत्पन्नानां वस्तूनां वर्णनं विहितम्। (८/१-७४) 'जनान्दोलन' नाम्नि नवमे सर्गे महात्मगान्धिजवाहरलालनेहरूमहाभागयोर्नेतृत्वे प्रवृत्तस्य स्वातन्त्र्यसंग्रामस्य सजीवं वर्णनं करोति कविः-

गान्धी महात्मा स जवाहरश्च सर्वामपीमामनुवीक्ष्य हेलाम्।
उत्थापितं भारतभूतलेऽन्यैः स्वातन्त्र्यसंग्राममपूपुषेताम्।।
स्वातन्त्र्यसङ्ग्राममहाभटानां शब्दैर्नभोमण्डलमप्यपूरि।
दिशां मुखान्यप्यनुलेपितानि धिक्कार-हुङ्कार-महार्ह-वर्णैः।।
(९/४७-४८)

राज्यं तृणं शुष्कमथो जनश्च दावानलस्तत्र जवाहराद्यैः।
अकारि योगः प्रगुणस्तदानीं द्वयोस्तयोर्योगिभिरार्य्यशीलैः।।
कारागृहाणामुदराणि हर्षात्प्रपूरितान्यार्यमहीसुपुत्रैः।
आत्माहुतीर्दातुमपारसंख्या यूनां समूहा उदिता अभूतन्।।
(९/५२-५३)

कवेर्मानसं हिरोशिमा-नागासाकी-परमाण्वस्त्र-विस्फोटेन दूनमस्ति। भारतविभाजनस्य पीडया कविः व्यथामाप्नोति। नोवाखालीरक्तपातेन तन्मनो दूयते। कविना समकालीना घटनाः-यथा रामजन्मभूमिविवादः, अन्नाहजारेकृत-मनशनं, बाबारामदेवकृतमनशनं तिरुवनन्तपुरस्थ-पद्मनाभस्वामिमन्दिरस्य कोषोद्घाटनम् प्रामाणिकतया निबद्धाः।

सम्पूर्णेऽपि महाकाव्ये कवित्वं चारुतया प्रतिष्ठितम्।

अस्य महाकाव्यस्याध्यापनं सर्वेषु विश्वविद्यालयेषु पूर्णतोंऽशतो वा यथा भवेत्तथा पाठ्यक्रमसमितिसदस्यैश्चेष्टनीयम्। युगगाथानिबन्धनार्थं किञ्च कवित्वस्य प्रौढ्याः संरक्षणार्थं महाकविः सनातनो भूयो भूयोऽभिनन्द्यते प्रणम्यते च।

***स्वातन्त्र्यसम्भवम्*** *(१-७५ सर्गात्मकं महाकाव्यम्) सनातनकविः आचार्य रेवाप्रसादद्विवेदी,* ***प्रका.*** *कालिदाससंस्थानम्, २८ महामनापुरी, पोस्ट का.हि.वि.वि. (बी.एच.यू.) वाराणसी- २२१००५,* ***मूल्यम्*** *५११/-,* ***संस्क.*** *२०११।*

**( रमाकान्त शुक्लः )**

●

# डा. देवीदत्तशर्मा कीर्तिशेषः संवृत्तः!

सुख्यातो भाषाविद्, पञ्जाबविश्वविद्यालयस्य पूर्वसंस्कृत- विभागाध्यक्षाचार्यो भारतस्य महामहिमराष्ट्रपतिना सम्मानप्रमाणपत्रेण सम्मानितः किञ्च देववाणी-परिषद आजीवनसदस्यः 'पद्मश्रीः' डा. देवीदत्त शर्मा १५.३.२०१२ तमे दिनांके ९.३० वादनकाले दिल्ल्याम् 'आर.एन. आर.' चिकित्सालये अन्तिमं श्वासमग्रहीत्। १६.३.२०१२ तमे दिनांके हल्द्वानी नगरे रानीबागस्थचित्रशिलाघट्टे तस्य अन्येष्टिरभवत्। तस्य पुत्रेण कर्नल मनोज शर्मणा तस्मै मुखाग्निर्दत्तः।

डा. देवीदत्त शर्मा नैनीतालजनपदान्तर्गतं भीमतालनाम्नि नगरे १९२८ तमे ईशवीयेऽब्दे समुत्पन्नः। तेन उत्तरप्रदेशे खुर्जानगरे श्रीराधाकृष्णसंस्कृतमहाविद्यालये आचार्यश्रीब्रह्मानन्दशुक्लात् संस्कृतसाहित्यमधीतम्। तदनु तेन काशीहिन्दूविश्व- विद्यालयेऽध्ययनं शोधकार्यं च कृतम्। स पञ्जाबविश्वविद्यालयस्य संस्कृतविभागाचार्याध्यक्षपदात् सेवानिवृत्तोऽभूत्। तेन ४८ प्राया ग्रन्थाः १५०तोऽधिकाः शोधलेखाश्च ग्रथिताः। तस्य प्रमुखग्रन्थेषु 'कालिदास की कला और संस्कृति (भागद्वयम्)', 'मेघदूतः एक विश्लेषण', 'रघुवंशः एक विश्लेषण', अभिज्ञानशकुन्तलः एक विश्लेषण', 'हिमालय संस्कृति के मूल आधार', 'उत्तराखण्ड का सामाजिक इतिहास (पञ्चसु खण्डेषु)', 'उत्तराखण्ड के लोकदेवता' इत्यादयः सन्ति। डा. शर्मणा दरद-भाषायां गहनमध्ययनं कृतम्। तस्मै 'अखिलभारतीयविद्वत्सम्मानः', 'युगाब्दविद्वत्सम्मानः', 'सहस्राब्दि-सम्मानः', 'राष्ट्रपति-सम्मानः', 'उत्तराञ्चलराष्ट्रीयसम्मानः', 'साहित्य शिरोमणि सम्मानः', 'उत्तराञ्चलविद्वत्सम्मानः', 'कुमाऊँ गौरवसम्मानः' इत्याद्यनेके सम्मानाः प्रादीयन्त।

२३.१.२०१२ तारिकायाम् उत्तराखण्ड-संस्कृत-अकादम्या हल्द्वानीनगरे आयोजितस्य अ.भा. संस्कृतकविसम्मेलनस्य उद्घाटनसमारोहे तेन संस्कृतमाध्यमेन सम्भवतः कस्मिंश्चित् सार्वजनिकसंस्कृतसमारोहे अन्तिमं भाषणं कृतम्। विशिष्टातिथिषु केवलं डा. शर्मैवासीत् येन संस्कृतमाध्यमेना- भिभाषितम्, शेषे सर्वेऽपि हिन्दी-भाषा-माध्यमेनाभाषन्त।

'देववाणी-परिषद्, दिल्ली' डा. देवीदत्तशर्मणो निधने शोकं व्यनक्ति अथ च परमेश्वरं प्रार्थयति यत् दिवंगतायात्मने शान्तिं दद्यात् परिवारजनेभ्यश्च तदात्यन्तिकवियोगसहनस्य शक्तिं दद्यात्।

देववाणीपरिषत्पक्षतः डा. शर्मणे श्रद्धाञ्जलयः समर्प्यन्ते! ॐ शान्तिः!

**-रमाकान्त शुक्लः**

महासचिवः, देववाणी-परिषद्, दिल्ली

# गुर्जरीयां धरां तां नमामो वयम्

- डा. रमाकान्त शुक्लः
आर ६ वाणी-विहारः, नई दिल्ली- ११००५९

श्लाघनीया त्रिलोक्यां मता रत्नसूः वन्दनीयं च तत्रास्ति मे भारतम् ।
कीर्तनीया च तत्रापि या राजते गुर्जरीयां धरां तां नमामो वयम् ॥१॥

आतिथेयाः जनाः, सात्त्विकं भोजनं स्वावलम्बोद्यमो भक्तिभावो हृदि ।
यत्र वाङ्माधुरी शास्ति दृप्तान् जनान् गुर्जरीयां धरां तां नमामो वयम् ॥२॥

अक्षराद्ये शुभे धाम्नि कर्णावतीपूःस्थिते यत्र रात्रौ जलीये पटे ।
नाचिकेतीयवृत्तं प्रतिक्षिप्यते गुर्जरीयां धरां तां नमामो वयम् ॥३॥

यत्र कण्ठीरवाणां ध्वनिः श्रूयते यत्र चाब्धेस्तरंगध्वनिः श्रूयते ।
गायकानां ध्वनिर्यत्र च श्रूयते गुर्जरीयां धरां तां नमामो वयम् ॥४॥

श्यामलारण्यभूम्या तथोद्यानकैः राजमार्गैस्तटाकैश्च विद्यालयैः ।
मन्दिरैर्मस्जिदैर्यास्ति संशोभिता गुर्जरीयां धरां तां नमामो वयम् ॥५॥

भूमिकम्पं विषह्यापि भीता न या चिन्तिता नापि या वीक्ष्य चोपद्रवान् ।
या चतुर्दिक्-विकासं समाकांक्षति गुर्जरीयां धरां तां नमामो वयम् ॥६॥

यत्र सिद्धेश्वरो यत्र चाम्बा परा यत्र सोमेश्वरो भक्तकल्पद्रुमः ।
आस्तिकेभ्यो ददात्यात्मतुष्टिं च या गुर्जरीयां धरां तां नमामो वयम् ॥७॥

यत्र च द्वारकाधीश आराध्यते यत्र च श्रीभवो नाथ आराध्यते ।
दत्तपादाम्बुजानां च यत्रार्चना गुर्जरीयां धरां तां नमामो वयम् ॥८॥

भारतस्य प्रतिष्ठां सुपुष्टिं तथा वर्धयन्ती विकासं तथा नूतनम् ।
भक्तिभावं दधाना च या मानसे गुर्जरीयां धरां तां नमामो वयम् ॥९॥

साभ्रमत्यास्तथा नर्मदाया जलैः किञ्च तापी-मही-पुष्टिदैर्वारिभिः ।
सेचिता या प्रसन्ना सती राजते गुर्जरीयां धरां तां नमामो वयम् ॥१०॥

यास्त्यहिंसा-तपस्यास्थली विश्रुता धर्म-कामार्थ-मोक्षप्रदा पावनी ।
यत्र सत्यप्रयोगाः कृता गान्धिना गुर्जरीयां धरां तां नमामो वयम् ॥११॥

यत्र रत्नाकरस्यातिरम्ये तटे सोमनाथस्य लब्ध्वा प्रसादं शुभम् ।
जायते धन्यधन्यो जनो जीवने गुर्जरीयां धरां तां नमामो वयम् ॥१२॥

स्वामिनारायणः स्वोपदेशैः शुभैर् लोकमुद्बोध्य जातोऽस्ति वन्द्यो नृणाम् ।
यत्र कृष्णप्रणामी च संमोदते गुर्जरीयां धरां तां नमामो वयम् ॥१३॥

स्वामिनारायणाख्ये गुरूणां कुले दर्शनाख्ये च गीर्वाणवाणीगृहे ।
भारतस्यायतिर्यत्र संरक्ष्यते गुर्जरीयां धरां तां नमामो वयम् ॥१४॥

श्रीदयानन्द-गान्धी-पटेलोपमाः यत्सुता विश्वसत्प्रेरणादायकाः ।
डाण्डियारास आस्ते च यस्याः श्रुतो गुर्जरीयां धरां तां नमामो वयम् ॥१५॥

यत्र गर्बाभिधानं हि सन्नर्तनं दर्शका वीक्ष्य मोदं पर लम्भिताः ।
सत्कला यत्र चित्तं चमत्कुर्वते गुर्जरीया धरां तां नमामो वयम् ॥१६॥

गाँठिया-फाफड़ा-खाकरा-भाखरी-ढोकला-खम्मणाद्यैर्बहुव्यञ्जनैः ।
षड्रसैस्तर्पयन्त्यस्ति यागन्तुकान् गुर्जरीयां धरां तां नमामो वयम् ॥१७॥

वेदपाठस्य घोषेण सम्पूरिता या च कम्प्यूटरीयप्रकर्षान्विता ।
सत्कलाधारिणी या विकासैषिणी गुर्जरीयां धरां तां नमामो वयम् ॥१८॥

इन्धनान्वेषणं तैलसंशोधनं कर्षणं सत्कथाश्रावणं कुर्वती ।
यास्त्यहिंसारसेन प्रपूर्णा प्रपा गुर्जरीयां धरां तां नमामो वयम् ॥१९॥

लोकगीतेषु चित्तं यदीयं रतं लोकनृत्येषु चित्तं यदीय रतम् ।
लोककृत्येषु चित्तं यदीय रतं गुर्जरीयां धरां तां नमामो वयम् ॥२०॥

नर्तकैर्वादकैर्गायकैर्नेतृभिः साधकैः सद्भिरुद्योगसञ्चालकैः ।
देशभक्तैर्बुधैश्चास्ति यालंकृता गुर्जरीयां धरां तां नमामो वयम् ॥२१॥

सागरीयैस्तटैः कच्छभूधन्वना जंगलैरद्रिभिश्चोर्वरैः क्षेत्रकैः ।
राजमार्गैश्च या यन्त्रगेहैर्युता गुर्जरीयां धरां तां नमामो वयम् ॥२२॥

यत्र चोषानिरुद्धप्रसिद्धा कथा श्राव्यते माणभट्टैः रसैरन्विता ।
वादयद्भिर्घटं रञ्जयद्भिर्जनान् गुर्जरीयां धरां तां नमामो वयम् ॥२३॥

गीयते लोकगीतेषु शम्भोः कथा गायकैर्भव्यवेशैस्तथा सुस्वरैः ।
पठ्यते यत्र दोहा च तारस्वरैः गुर्जरीयां धरां तां नमामो वयम् ॥२४॥

विश्वकोषोपमो लब्धवाणीवरः संस्कृत-प्राकृत-ग्रन्थकर्ता महान् ।
हेमचन्द्रः प्रसिद्धः प्रदत्तो यया गुर्जरीयां धरां तां नमामो वयम् ॥२५॥

रामगाथाप्रणेता कविर्नर्मदः कृष्णभक्तो नृसिंहस्तथा मेहता ।
यत्र भक्तिप्रवाहेण लोकश्रुतौ गुर्जरीयां धरां तां नमामो वयम् ॥२६॥

डोंगरेजी-सदृक्षैस्तथा कृष्णचन्द्रोपमैः शास्त्रिभिः सेविताजीवनम् ।
श्रीमुरारी रमेशश्च यत्पुत्रकौ गुर्जरीयां धरां तां नमामो वयम् ॥२७॥

माधवो हर्षदेवोऽथ नानावटी राजपूर्वो रसो वासुदेवाभिधः ।
यत्र चान्येऽपि सत्काव्यकाराः श्रुताः गुर्जरीयां धरां तां नमामो वयम् ॥२८॥

'देवसायुज्य'-'बोरी'-प्रदीपा'दिभिः पत्रकैः सावधीयैः सुसंसेविता ।
'वर्तमानेन पत्रेण'या कीर्तिता गुर्जरीयां धरां तां नमामो वयम् ॥२९॥

या प्रबन्धस्य विद्यालयैर्भूषिता यास्ति विज्ञानसंरक्षिका विश्रुता ।
यत्र वाणिज्य-विद्याविकासो नवो गुर्जरीयां धरां तां नमामो वयम् ॥३०॥

भारतस्य प्रतिष्ठां सुपुष्टिं तथा वर्धयन्ती विकासं तथा नूतनम् ।
भक्तिभावं दधाना च या मानसे गुर्जरीयां धरां तां नमामो वयम् ॥३१॥

शोषितो यत्र कश्चिन्न संलक्ष्यते व्याधिना पीडितो नो तथा दृश्यते ।
यत्र नो कोऽपि दीनोऽस्ति हीनोऽथवा गुर्जरीयां धरां तां नमामो वयम् ॥३२॥

अद्य देशे समस्तेषु राज्येष्वहो यत्र सौशासनं निस्तुलं राजते ।
वर्धते यत्र मोदो समेषां नृणां गुर्जरीयां धरां तां नमामो वयम् ॥३३॥

(१८.२.२०१२तमे दिनांके अहमदाबादे गुजरातसंस्कृतसाहित्याकादम्यायोजिते 'गीर्वाण-गुर्जरी'-कविसमवाये पठिता रचना)

●

'गीर्वाण-गुर्जरी'-कविसमवायस्य चित्राणि (१८.२.२०१२)

---

## अर्वाचीनसंस्कृतस्य ग्राहकशुल्कम्

वार्षिकं (भारते) रु० १००.००

वार्षिकं (विदेशेषु) यू०एस० डालराः २०

डाकव्ययः यदि पंजीकृत(रजिस्टर्ड) डाकद्वारा अर्वाचीनसंस्कृतस्य सर्वेऽप्यंकाः प्रेष्येरन्

| | |
|---|---|
| भारते | रु० १००.०० |
| विदेशेषु | यू०एस० डालराः 4० |
| अस्याङ्कस्य मूल्यम् | रु० ९०.०० |

विगतांकानां (Back Volumes) प्रतिवर्षम् मूल्यम् रु० १००/- २० डालरा वा। देववाणी-परिषदः सदस्यानां सभासदां च कृते पत्रं निःशुल्कं प्रेष्यते। किन्तु पंजीकृतडाकद्वारा पत्रप्रेषणार्थं तैरपि डाकव्ययो देयः स्यात्। ग्राहकाः ग्राहकशुल्कम् 'अर्वाचीनसंस्कृतम् (Arvacheenasanskritam) इत्यंकितेन दिल्ल्यां/ नवदिल्ल्यां प्रदेयेन बैंकड्राफ्टेन/धनादेशेन (M.O.) वा निम्नलिखिते संकेते प्रेषयितुं प्रार्थ्यन्ते :-

सम्पादकः, अर्वाचीनसंस्कृतम्
देववाणी-परिषद्, दिल्ली
आर-६, वाणी-विहारः, नयी दिल्ली-११००५९ (भारतम्)
Editor, Arvacheenasanskritam
R-6, Vani Vihar, New Delhi-110059.

## लेखकान् प्रति निवेदनम्

आयत्यां केवलं **'वाकमैनचाणक्य'** फोण्टे चक्रिकायां (C.D.) 7"×4" आकारे देवनागरीलिप्यां मुद्रितैव सामग्री अर्वाचीनसंस्कृते प्रकाशनाय स्वीकृता स्यात्। लेखकाः कृपयास्मिन् विषये अवधानपरा भूत्वा अर्वाचीनसंस्कृतं कृतार्थयन्तु। छायाप्रतिलिप्यां प्रेषिता सामग्री प्रकाशनाय स्वीकृता न स्यात्। किञ्च संस्कृतजगद्वार्तासु केवलं संस्कृतभाषानिबद्धमेव वृत्तं प्रकाशनाय विचारणीयं भवेत्। **सम्पादकः**

## देववाणी-परिषदा प्रकाशिताः केचन ग्रन्थाः

| ग्रन्थाकः | ग्रन्थः लेखकः | मूल्यम् |
| --- | --- | --- |
| 23. | राधाकृष्णरसायनम् (श्री ओट्टूर उण्णि नम्बूदिरीपादः) | रु० १५०.०० |
| २८. | स्फूर्तिसप्तशती (डा० शिवदत्तशर्मा चतुर्वेदी) | रु० १५०.०० |
| २९. | साहित्यकौतुकम् (पं० टी०वी० परमेश्वर अय्यरः) | रु० १५०.०० |
| ४४. | रसदर्शनम् (डा० रमेशचन्द्र शुक्लः) | रु० १५०.०० |
| ४९. | कूहा (काव्यम्) (डा० उमाकान्त शुक्लः) | रु० ६०.०० |
| ५३. | सारस्वतसमुन्मेषः (डा० विन्ध्येश्वरीप्रसाद मिश्र 'विनयः') | रु० ६०.०० |
| ५९. | अध्यात्मरामायण में अध्यात्म-चिन्तन (श्री त्रिगुणानन्द शुक्ल) | रु० १५०.०० |
| ६४. | लक्ष्मीशतकम् (डा० वरदाचार्य कण्णन्) | रु० ६०.०० |
| ६५. | ऋतम् (उपन्यासः) (डा० केशवचन्द्र दाशः) | रु० ६०.०० |
| ७२. | श्रीगान्धिचरितम् (प्रो० चारुदेव शास्त्री) | रु० १५०.०० |
| ७५. | भाति मे भारतम् (काव्यम्) (डा० रमाकान्त शुक्लः) | रु० ११०.०० |
| ८१. | नाट्यसप्तकम् (नाटकम्) (डा० रमाकान्त शुक्लः) | रु० २००.०० |
| ९१. | भारतजनताहम् (कवितासंग्रहः)(डा० रमाकान्तशुक्लः) | रु० २००.०० |
| ९५. | प्रकाशकिरणावली (पं० प्रकाशचन्द्र मिश्रः) | रु० १००.०० |
| १०७. | श्रीसुन्दरराज-रचनावली (श्री श्री०सुन्दरराजः) | रु० ५००.०० |
| १०८. | भाति मे भारतम् (हिन्दी पद्यानुवाद-कर्ण पाराशर) | रु० १००.०० |
| १०९. | श्रीमद्रामचरितमानसम् (पं० प्रेम नारायण द्विवेदी) | रु० १०००.०० |
| ११०. | श्रीधर भास्कर वर्णेकर-कृत श्रीशिवराज्योदयम् महाकाव्य का साहित्यशास्त्रीय अध्ययन (डा० अभिनव शुक्ल) | रु० ८००.०० |
| ११२. | आयुर्वेदशास्त्रस्य परिप्रेक्ष्ये सत्याग्रहनीतिकाव्यस्यानुशीलनम् (डॉ० चन्द्रमौलि शुक्लः) | रु० ३५०.०० |
| ११३. | सर्वशुक्लोत्तरा (कवितासंग्रहः) (डा. रमाकान्त शुक्लः) | रु० ५००.०० |
| ११४. | भाति मे भारतम् (गुजरातीभाषानुवादः डा० मनसुख पी.पटोलिया) | रु० १००.०० |
| ११५. | बीसवीं शताब्दी के उत्तरार्द्ध में आधुनिक संस्कृत नाटक : एक अध्ययन (डा. कल्पना द्विवेदी) | रु० ५००.०० |
| ११६. | निस्यन्दिनी (डा. जनार्दनप्रसादपाण्डेय 'मणिः') | रु० २५०.०० |
| ११७. | कथाञ्जलिः (मूलहिन्दीलेखकः - डा. योगेन्द्रनाथ शुक्लः, संस्कृतानुवादकर्त्री - डा. अर्चना जोशी) | रु० २००.०० |
| ११८. | 'श्रीस्वामिविवेकानन्दचरितम्' और 'विश्वभानुः' (डा. रवीन्द्र नागर) | रु० ५००.०० |


**देववाणी-परिषद्, दिल्ली**

आर-६ वाणी विहारः,

नई दिल्ली- ११००५९ फोन : २८५६१८४६

**DEVAVANI PARISHAD, DELHI**

R-6, Vani Vihar, New Delhi-110059.

Phone: 011-28561846

devavanipd@gmail.com

arvacheenam@gmail.com.



'देववाणी-परिषद्, दिल्ली'-कृते डा० रमाकान्तशुक्लेन 'देववाणी प्रिन्टर्स, डब्ल्यू. जेड. १४७ ए, सूबेदार मार्केट, उत्तम नगर, नई दिल्ली-११००५९' इति मुद्रणालये मुद्रापयित्वा 'आर-६, वाणी विहारः, नई दिल्ली-११००५९' तः प्रकाशितम्-अर्वाचीनसंस्कृतम् (३४/२-३५/४ संयुक्ताङ्कः १३२-१३८) प्रधानसम्पादकः डा० रमाकान्त शुक्लः। प्रकाशनतिथिः १५-०४-२०१२। अस्यांकस्य मूल्यम् ₹ 200.00।